लघुसिद्धान्तकौमुद्याम्
(तद्धितेषु शैषिकाः)

# प्राग्दीव्यतीय-४६ अर्थाः, शैषिकाः-२४

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

१ महोत्सर्गः (अण्)

१.तस्यापत्यम् ४.१.९२
२. तेन रक्तं रागात् ४.२.१
३. नक्षत्रेण युक्तः कालः ४.२.३
४. दृष्टं साम ४.२.७
५. परिवृतो रथः ४.२.१०
६. तत्रोद्धृतममत्रेभ्यः ४.२.१४
७. स्थण्डिलाच्छयितरि व्रते ४.२.१५
८. संस्कृतं भक्षाः ४.२.१६
९. सास्मिन्पौर्णमासीति संज्ञायाम् ४.२.२१
१०. सास्य देवता ४.२.२४
११. तस्य समूहः ४.२.३७
१२. विषयो देशे ४.२.५२
१३. सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ४.२.५५
१४. तदस्यां प्रहरणमिति क्रीडायां णः ४.२.५७
१५. तदधीते तद्वेद ४.२.५९
१६. तदस्मिन्नस्तीति देशे तन्नाम्नि ४.२.६७
१७. तेन निर्वृत्तम् ४.२.६८
१८.तस्य निवासः ४.२.६९
१९. अदूरभवश्च ४.२.७०

अथ शैषिकाः:- यहाँ से 'तस्येदम्' तक के अर्थ शैषिक अर्थ हैं—

२०.तत्र जातः ४.३.२५
२१. कृतलब्धक्रीतकुशलाः ४.३.३८
२२. प्रायभवः ४.३.३९
२३. संभूते ४.३.४१
२४. कालात्साधुपुष्प्यत्पच्यमानेषु ४.३.४३
२५. उप्ते च ४.३.४४
२६. देयमृणे ४.३.४७
२७. व्याहरति मृगः ४.३.५१
२८. तदस्य सोढम् ४.३.५२
२९. तत्र भवः ४.३.५३
३०. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ४.३.६६
३१. तत आगतः ४.३.७४
३२. प्रभवति ४.३.८३
३३.तद्गच्छति पथिदूतयोः ४.३.८५
३४. अभिनिष्क्रामति द्वारम् ४.३.८६
३५. अधिकृत्य कृते ग्रन्थे ४.३.८७
३६. सोऽस्य निवासः ४.३.८९
३७. अभिजनश्च ४.३.९०
३८. भक्तिः ४.३.९५
३९. तेन प्रोक्तम् ४.३.१०१
४०. तेनैकदिक् ४.३.११२
४१. उपज्ञाते ४.३.११५
४२. कृते ग्रन्थे ४.३.११६
४३. तस्येदम् ४.३.१२०

(इति शैषिकाः)

४४. तस्य विकारः ४.३.१३४
४५. अवयवे च प्राण्यौषधिवृक्षेभ्यः ४.३.१३५

❖ लघुसिद्धान्तकौमुद्यां सङ्ग्रहीताः २७ प्राग्दीव्यतीयार्थाः। १२ शैषिकाः

२ महोत्सर्गः (ठक्)

१.प्राग्वहतेष्ठक् ४.४.१
२. तेन दीव्यति खनति जयति जितम् ४.४.२

१.अपत्याधिकारः | २.रक्ताद्यर्थकाः | ३.चातुरर्थिकाः | ४.शैषिकाः | ५.विकारार्थकाः

# 'शेषे' इति सूत्रव्याख्यानम्



❖ अणादि-प्रत्ययविधायकं विधिसूत्रम् अधिकारसूत्रञ्च— {मूलपाठः}

**सूत्रम्— शेषे॥ (४,१.९२)**

**अर्थः—** अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः।

- चक्षुषा गृह्यते= चाक्षुषं= रूपम्। — तेन गृह्यते।
- श्रावणः= शब्दः। — तेन श्रूयते।
- औपनिषदः= पुरुषः। — तैः प्रतिपाद्यते।
- दृषदि पिष्टा= दार्षदाः= सक्तवः। — तत्र पिष्टम्।
- चतुर्भिरुह्यं= चातुरं= शकटम्। — तैः उह्यते।
- चतुर्दश्यां दृश्यते= चातुर्दशं= रक्षः। — तत्र दृश्यते।
- 'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः॥ (लक्षणं च।)
  ४.३.१३४

चेन्नै संस्करणे अधिकः पाठः।

चक्षुषा गृह्यते
चक्षुष् टा + अण्
चाक्षुष् + अ
चाक्षुषम् (रूपम्)

चक्षुषा गृह्यते
चक्षुष् टा + अण्
चाक्षुष् + अ
चाक्षुषम् (रूपम्)

श्रवणेन गृह्यते
श्रवण टा + अण्
श्रावण् + अ
श्रावणः (शब्दः)

उपनिषद्भिः प्रतिपाद्यते / उपनिषदि दृश्यते
उपनिषद् भिस् + अण्
औपनिषद् + अ
औपनिषदः(पुरुषः)

दृषदि पिष्टा
दृषद् ङि + अण्
दार्षद् + अ
दार्षदाः (सक्तवः)

चतुर्भिः (अश्वैः) उह्यते
चतुर् भिस् + अण्
चातुर् + अ
चातुरं (शकटम्)

चतुर्दश्यां दृश्यते
चतुर्दशी ङि + अण्
चातुर्दशम्

(रक्षः= राक्षसः)

# राष्ट्र-अवारपाराद् 'घ-ख'प्रत्यययोर्विधानम्



❖ घ-खप्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

सूत्रम्— राष्ट्रावारपाराद् घ-खौ (४,२.९३)

अर्थः— आभ्यां क्रमाद् घ-खौ स्तः शेषे।

- राष्ट्रे जातादिः= राष्ट्रियः। अवारपारीणः।

अत्र 'शेषे' इत्यधिकाराद् बहिर्भूते 'प्राक् क्रीताच्छः' इति छाधिकारे 'तस्मै हितम्' इत्यर्थे 'राष्ट्रीयः' इत्यपि सिद्ध्यति।

वार्तिकम्— अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्।

अर्थः— अवारपारशब्दाद् विगृहीताद्= अवारशब्दात् पारशब्दाच्च पृथग्भूताद् अपि विपरीतात्= पारावारशब्दात् च 'ख' प्रत्ययः स्यात्।

- अवारीणः। पारीणः।
- पारावारीणः।
- इह प्रकृतिविशेषाद् घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते॥

राष्ट्रे जातः इत्यादि
राष्ट्र ङि + घ
राष्ट्र्+ इय
राष्ट्रियः

अवारपारे जातः इत्यादि
अवारपार ङि + ख
अवारपार् + ईन
अवारपारीणः

अवार— अवारीणः
पार— पारीणः
पारावार— पारावारीणः

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु शैषिकाः)

# प्रकृतिविशेषात् य-खञ्-ढक्-त्यक्-प्रत्यययानां विधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ य-खञ्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **ग्रामाद्यखञौ (४,२.९४)**

अर्थः— ग्रामशब्दात् जाताद्यर्थेषु य-खञ् एतौ स्तः शेषे।

○ ग्राम्यः। ग्रामीणः॥

❖ ढक्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **नद्यादिभ्यो ढक् (४,२.९७)**

अर्थः- नद्यादिगणपठितात् जाताद्यर्थेषु 'ढक्' स्यात् शेषे।

○ नादेयम्। माहेयम्। वाराणसेयम्॥

❖ त्यक्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— **दक्षिणापश्चात्पुरसस्त्यक् (४,२.९८)**

अर्थः— दक्षिणा-पश्चात्-पुरस्-अव्ययेभ्यः 'त्यक्' स्यात् शेषे।

○ दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः॥

**ग्रामे जातः इत्यादि**
ग्राम ङि + य
ग्राम् + य
ग्राम्यः

**ग्रामे जातः इत्यादि**
ग्राम ङि + खञ्
ग्राम् + ईन
ग्रामीणः

**नद्यां जातः इत्यादि**
नदी ङि + ढक्
नाद् + एय
नादेयम्

**मह्यां जातः इत्यादि**
मही ङि + ढक्
माह् + एय
माहेयम्

**वाराणस्यां जातः इत्यादि**
वाराणसी ङि + ढक्
वाराणस् + एय
वाराणसेयम्

**दक्षिणा जातः इत्यादि**
दक्षिणा+ त्यक्
दाक्षिण्+ त्य
दाक्षिणात्यः

# दिवादिप्रकृतिभ्यः ‘यत्’ प्रत्ययविधानम्



{मूलपाठः}

❖ यत्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— द्युप्रागपागुदक्प्रतीचो यत्॥ (४,२.१०१)

अर्थः— दिव्-प्राञ्च्-अपाञ्च्-उदञ्च्-प्रत्यञ्च्- एभ्यः जाताद्यर्थे ‘यत्’ प्रत्ययः स्यात्।

- दिव्यम्। — दिव्— द्यौः= स्वर्गः
- प्राच्यम्। — प्राञ्च्— प्राङ्= पूर्वदिशा
- अपाच्यम्। — अपाञ्च्— अपाङ्= पश्चिमदिशा
- उदीच्यम्। — उदञ्च्— उदङ्= उत्तरदिशा
- प्रतीच्यम्॥ — प्रत्यञ्च्— प्रत्यङ्=पश्चिमदिशा

**दिवि जातम् इत्यादि**
दिव् ङि + यत्
दिव्+ य
दिव्यम्

**प्राचि जातमित्यादि**
प्राञ्च् ङि + यत्
प्राच्+ य (अनिदितां..)
प्राच्यम्

**अपाचि जातमित्यादि**
अपाञ्च् ङि + यत्
अपाच्+ य (अनिदितां..)
अपाच्यम्

**उदीचि जातमित्यादि**
उदञ्च् ङि + यत्
उदच्+ य (अनिदितां..)
उदीच्+ य (उद ईत्)
उदीच्यम्

**प्रतीचि जातमित्यादि**
प्रत्यञ्च् ङि + यत्
प्रत्यच्+ य (अनिदितां..)
प्रति च्+ य (अचः)
प्रतीच्+ य (चौ)
प्रतीच्यम्

# अव्ययेभ्यः ‘त्यप्’ प्रत्ययविधानम्



❖ त्यप्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्**— अव्ययात् त्यप् (४,२.१०४)

**अर्थः**— अव्ययेभ्यः जाताद्यर्थे ‘त्यप्’ प्रत्ययः स्यात्।

**वार्तिकम्**— अमेह-क्व-तसिँ-त्रेभ्य एव।

**अर्थः**— अमा-इह-क्व-तसिँप्रत्ययान्तेभ्यः-त्रप्रत्ययान्तेभ्यः एव ‘अव्ययात् त्यप्’ इत्यनेन ‘त्यप्’ प्रत्ययः स्यात्।

- अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः।

**वार्तिकम्**— त्यब्नेर्ध्रुव इति वक्तव्यम्।

**अर्थः**— ध्रुवेऽर्थे गम्ये सति ‘नि’ इत्यव्ययात् ‘त्यप्’ प्रत्ययः स्यात्।

- नित्यः॥

अमा भवः इत्यादि
अमा+ त्यप्
अमा+ त्य
अमात्यः

इह भवः इत्यादि
इह+ त्यप्
इह+ त्य
इहत्यः

क्व भवः इत्यादि— क्वत्यः
ततः आगतः— ततस्त्यः
तत्र भवः इत्यादि— तत्रत्यः

नितरां भवः इत्यादि/ नि=नियतम्=सर्वकालेषु भवः।
नि+ त्यप्
नि+ त्य= नित्यः

# वृद्धसञ्ज्ञायां प्रत्ययविधानम्



{मूलपाठः}

❖ वृद्धसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— वृद्धिर्यस्याचामादिस्तद्वृद्धम् (१,१.७३)**

अर्थः— यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसञ्ज्ञं स्यात् ॥

❖ वृद्धसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— त्यदादीनि च (१,१.७४)**

अर्थः — त्यदादिगणे पठितानां शब्दानां वृद्धसञ्ज्ञानि स्युः ॥

❖ छ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— वृद्धाच्छः (४,२.११४)**

अर्थः— वृद्धात् प्रातिपदिकात् छः प्रत्ययो भवति शैषिकः।

- शालीयः। मालीयः। तदीयः।

**वार्तिकम्— वा नामधेयस्य वृद्धसञ्ज्ञा वक्तव्या।**

- देवदत्तीयः, दैवदत्तः ॥

त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतुँ, किम् ॥

शालायां जातः इत्यादि

शाला ङि + छ

शाल् + ईय

शालीयः

तस्यायम् इत्यादि

तद् ङस् + छ

तद्+ ईय

तदीयः

देवदत्तस्यायम् इत्यादि

देवदत्त ङस् + छ

देवदत्त्+ ईय

देवदत्तीयः

# गहादिभ्यः छ-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ छ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** गहादिभ्यश्च (४,२.१३८)

**अर्थः—** 'गह' इत्येवमादिभ्यः प्रातिपदिकेभ्यः 'छः' प्रत्ययः स्यात् शैषिकः।

○ गहीयः॥

गहे भवः/ जातः इत्यादि

गह ङि + छ

गह् + ईय

गहीयः

गह। अन्तःस्थ। सम। विषम। मध्य-मध्यमं चाण् चरणे। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। एष्वग्र। इष्वनी। अवस्यन्दी। कामप्रस्थ। खाडायनि। कावेरणि शैशिरि। शौङ्गि। आसुरि। आहिंसि। आमित्रि। व्याडि। वैदजि। भौजि। आढ्यश्वि। आनृशंसि। सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। श्रौति। आरटकि। वाल्मीकि। क्षेमवृद्धिन्। उत्तर। अन्तर। मुखपार्श्वतसोर्लोपः। जनपरयोः कुक्च। देवस्य च। वेणुकादिभ्यश् छण्। आकृतिगणोऽयम्।

# युष्मद्-अस्मद्-शब्दाभ्यां प्रत्ययविधानम्



{मूलपाठः}

❖ खञ्-छ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— युष्मदस्मदोरन्यतरस्यां खञ् च (४,३.१)**

अर्थः— 'युष्मद्'शब्दात् 'अस्मद्'शब्दाच्च जाताद्यर्थेषु खञ् स्यात्। चाच्छः।

- पक्षेऽण्।
- युवयोर्युष्माकं वा अयम्= युष्मदीयः।
- आवयोः अस्माकं वा अयम् = अस्मदीयः॥

❖ युष्माक-अस्माक-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— तस्मिन्नणि च युष्माकास्माकौ (४,३.२)**

अर्थः —युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च।

- यौष्माकीणः। आस्माकीनः।
- यौष्माकः। आस्माकः॥

युवयोर्युष्माकं वा अयम्
युष्मद् ओस्/आम् + छ
युष्मद् + ईय
युष्मदीयः

| | |
|---|---|
| युष्मद् + खञ्<br>युष्माक + ईन<br>यौष्माक् + ईन<br>यौष्माकीणः | अस्मद् + खञ्<br>अस्माक + ईन<br>आस्माक् + ईन<br>आस्माकीनः |
| युष्मद् + अण्<br>युष्माक + अ<br>यौष्माक् + अ<br>यौष्माकः | अस्मद् + अण्<br>अस्माक + अ<br>आस्माक् + अ<br>आस्माकः |

# एकार्थवाचकाभ्यां युष्मद्-अस्मद्-शब्दाभ्यां प्रत्ययविधानम्



{मूलपाठः}

❖ तवक-ममक-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— तवकममकावेकवचने (४,३.३)**

अर्थः— एकार्थवाचिनोर्युष्मदस्मदोस्तवक-ममकौ स्तः खञि अणि च।

- तावकीनः। तावकः।
- मामकीनः। मामकः।
- छे तु –



❖ त्व-म-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— प्रत्ययोत्तरपदयोश्च (७,२.९८)**

अर्थः — मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः।

- त्वदीयः। मदीयः।
- त्वत्पुत्रः। मत्पुत्रः॥

**सूत्रम्— मध्यान्मः (४,३.८)**

- मध्यमः॥

तव अयम्
युष्मद् ङस् + खञ्
तवक + ईन
तावक् + ईन
तावकीनः

युष्मद् + अण्
तवक + अ
तावक् + अ
तावकः

तव अयम्
युष्मद् ङस् + छ
त्वद् + ईय
त्वदीयः

मम अयम्
अस्मद् ङस् + छ
मद् + ईय
मदीयः

तव पुत्रः— त्वत्पुत्रः
मम पुत्रः— मत्पुत्रः

# कालशब्दात् तद्वाचिभ्यः प्रत्ययविधानम्



{मूलपाठः}

❖ ठञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— कालाट्ठञ् (४,३.११)**

अर्थः—कालवाचिभ्यष्ठञ् स्यात्।

स्पष्टार्थः— कालशब्दात् तद्वाचिभ्यः अहन्, मास, संवत्सर,वर्षेत्यादिभ्यः 'ठञ्' स्यात्।

○ कालिकम्। मासिकम्। सांवत्सरिकम्।

**वार्तिकम्— अव्ययानां भमात्रे टिलोपः।**

अर्थः— भसञ्ज्ञामात्रेणैव अव्ययानां टिसञ्ज्ञकस्य भागस्य लोपः स्यात्।

○ सायम्प्रातिकः। पौनः पुनिकः॥

❖ एण्य-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— प्रावृष एण्यः (४,३.१७)**

अर्थः — 'प्रावृष्'इति शब्दाद् 'एण्य' प्रत्ययो भवति शैषिकः।

○ प्रावृषेण्यः॥

काले भवं जातं वा
काल ङि+ ठञ्
काल् + इक (ठस्येकः)
कालिकम्

मासे भवं जातं वा — मासिकम्
संवत्सरे भवं जातं वा — सांवत्सरिकम्

सायं प्रातर्भवः
सायंप्रातर्+ ठञ्
सायंप्रात् + इक
सायम्प्रातिकः

पुनः पुनः भवः
पुनःपुनर्+ ठञ्
पौनःपुन् + इक
पौनः पुनिकः

प्रावृषि भवः
प्रावृष् ङि+ एण्य
प्रावृष् + एण्य = प्रावृषेण्यः

# सायं चिरम्...कालवाचिभ्यः प्रत्ययविधानम्



❖ ट्यु- ट्युल्-प्रत्यय- तुँट्-आगमविधायकं विधिसूत्रम्— (निपातनविधिः) {मूलपाठः}

सूत्रम्— सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुँट् च (४,३.२३)

अर्थः— सायमित्यादिभ्यश्चतुर्भ्यः, अव्ययेभ्यश्च कालवाचिभ्यः ट्यु-ट्युलौ स्तः, स्तयोः तुँट् च।[१]

- सायन्तनम्। चिरन्तनम्।
- प्राह्णे प्रगे अनयोरेदन्तत्वं निपात्यते— प्राह्णेतनम्। प्रगेतनम्।
- दोषातनम्॥

'साय' इति घञन्तः।

१.तुँटः प्रागनादेशः। तेन 'अनद्यतन' इति निर्देशस्सङ्गच्छते। इति चैत्रे संस्करणे अधिकः पाठः।

'सायम्-चिरम्-प्राह्णे-प्रगे' एतानि चत्वारि अनव्ययानि।

प्रगे= प्रातःकाल
दोषा= रात्रिः

साये भवं जातं वा
साय ङि+ ट्यु/ट्युल्
साय + तुँट् अन
साय म् + त् अन
निपातनात् मान्तत्वम्
सायन्तनम्, सायंतनम्

चिरे भवम्— चिरन्तनम्
प्राह्णे भवम्— प्राह्णेतनम्
प्रगे भवम्— प्रागेतनम्
दोषा भवम्— दोषातनम्

# ‘तत्र जातः’ इत्यर्थे प्रत्ययविधानम्



❖ ‘तत्र जातः’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— तत्र जातः (४,३.२५)**

अर्थः— सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः।

- स्रुघ्ने जातः= स्रौघ्नः।
- उत्से जात= औत्सः।
- राष्ट्रे जातो= राष्ट्रियः।
- अवारपारे जातः= अवारपारीणः, इत्यादि।

❖ ठप्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— प्रावृषष्ठप् (४,३.२६)**

अर्थः — ‘प्रावृष्’इति शब्दात् ‘तत्र जातः’ इत्यर्थे ‘ठप्’ प्रत्ययः स्यात्।

- एण्यापवादः।
- प्रावृषिकः॥

स्रुघ्ने जातः
स्रुघ्न ङि + अण्
स्रौघ्न्+ अ
स्रौघ्नः (आगरा में उत्पन्न हुआ)

उत्से जातः
उत्स ङि + अञ्
औत्स्+ अ
औत्सः (झरने में उत्पन्न हुआ)

प्रावृषि जातः
प्रावृष् ङि+ ठप्
प्रावृष् + इक
प्रावृषिकः

# ‘प्रायभवः’ ‘सम्भूते’ इत्यर्थयोः प्रत्ययविधानम्



{मूलपाठः}

❖ ‘प्रायभवः’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— प्रायभवः (४,३.३९)**

अर्थः— तत्रेत्येव। सप्तम्यन्तात् ‘प्रायभव’ इत्यर्थेऽणादयो घादयश्च स्युः।

○ स्रुघ्ने प्रायेण= बाहुल्येन भवति= स्रौघ्नः॥

❖ ‘सम्भूते’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सम्भूते (४,३.४१)**

अर्थः — सप्तम्यन्तात् ‘सम्भावना’ इत्यर्थेऽणादयो घादयश्च स्युः।

○ स्रुघ्ने संभवति= स्रौघ्नः॥

❖ ढञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— कोशाड्ढञ् (४,३.४२)**

अर्थः — सप्तम्यन्तात् ‘कोश’ इति प्रातिपदिकात् ‘सम्भावना’ इत्यर्थे ‘ढञ्’स्यात्।

❖ कौशेयम् वस्त्रम्॥

स्रुघ्ने प्रायेण भवति।
स्रुघ्ने संभवति।
स्रुघ्न ङि + अण्
स्रौघ्न्+ अ
स्रौघ्नः

कोशे सम्भवति।
कोश ङि+ ढञ्
कौश + एय
कौश् + एय
कौशेयम् (वस्त्रम्)

# ‘तत्र भवः’ इत्यर्थे प्रत्ययविधानम्



{मूलपाठः}

❖ ‘तत्र भवः’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तत्र भवः (४,३.५३)**

अर्थः— सप्तम्यन्तात् समर्थाद् ‘भव’ इत्यर्थेऽणादयो घादयश्च स्युः।

○ स्रुग्घ्ने भवः स्रौग्घ्नः। औत्सः। राष्ट्रियः॥

❖ ‘तत्र भवः’ इत्यर्थे यत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— दिगादिभ्यो यत् (४,३.५४)**

अर्थः — सप्तम्यन्तात् समर्थाद् ‘भव’ इत्यर्थे ‘दिश्’आदिगणपठितेभ्यः ‘यत्’ स्यात्।

○ दिश्यम्। वर्ग्यम्॥

❖ ‘तत्र भवः’ इत्यर्थे यत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— शरीरावयवाच्च (४,३.५५)**

अर्थः — शरीरावयव-वाचकात् सप्तम्यन्तात् समर्थाद् ‘भव’ इत्यर्थे ‘यत्’ स्यात्।

❖ दन्त्यम्। कण्ठ्यम्।

| | |
|---|---|
| स्रुग्घ्ने भवः<br>स्रुग्घ्न ङि + अण्<br>स्रौग्घ्न्+ अ<br>स्रौग्घ्नः | उत्से भवः<br>उत्स ङि + अञ्<br>औत्स् + अ<br>औत्सः |
| दिशि भवम्<br>दिश् ङि+ यत्<br>दिश् + य<br>दिश्यम् | वर्गे भवम्<br>वर्ग ङि+ यत्<br>वर्ग् + य<br>वर्ग्यम् |
| दन्तेषु भवम्<br>दन्त सुप्+ यत्<br>दन्त्+ य<br>दन्त्यम् | कण्ठे भवम्<br>कण्ठ ङि+ यत्<br>कण्ठ् + य<br>कण्ठ्यम् |

# 'तत्र भवः' इत्यर्थे प्रत्ययविधानम्



{मूलपाठः}

**वार्तिकम्— अध्यात्मादेष्ठञ् इष्यते।**

अर्थः— सप्तम्यन्तात् समर्थाद् 'भव' इत्यर्थे 'अध्यात्म'आदिगणपठितेभ्यः 'ठञ्' स्यात्।

○ अध्यात्मं भवम्= आध्यात्मिकम्॥

❖ उभयपदवृद्धिविधायकं विधिसूत्रम्—

**सूत्रम्— अनुशतिकादीनां च (७,३.२०)**

अर्थः — एषामुभयपदवृद्धिर्ञिति णिति किति च।

○ आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्।

○ आकृतिगणोऽयम्॥

भूतेषु इति= अधिभूतम्, तत्र भवम्=आधिभौतिकम्।
इहलोके भवम्= ऐहलौकिकम्।

❖ छ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— जिह्वामूलाङ्गुलेश्छः (४,३.६२)**

परलोके भवम्= पारलौकिकम्।

अर्थः — सप्तम्यन्तात् जिह्वामूल-अङ्गुलिशब्दाच्च 'भव' इत्यर्थे 'छ'प्रत्ययः स्यात्।

जिह्वामूलीयम्। अङ्गुलीयम्॥

अङ्गुल्यां भवम्= अङ्गुलीयम्

❖ छ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— वर्गान्ताच्च (४,३.६३)**

अर्थः — सप्तम्यन्तात् 'वर्ग'शब्दान्तात् 'भव' इत्यर्थे 'छ'प्रत्ययः स्यात्।

कवर्गीयम्॥

अध्यात्मम्/अध्यात्मे भवम्
अध्यात्म ङि+ ठञ्
आध्यात्म् + इक (ठस्येकः)
आध्यात्मिकम्

देवेषु इति= अधिदेवम्, तत्र भवम्
अधिदेव सुप्+ ठञ्
आधिदेव् + इक
आधिदैविकम्

जिह्वामूले भवम्।
जिह्वामूल ङि+ छ
जिह्वामूल् + ईय= जिह्वामूलीयम्

कवर्गे भवम्।
कवर्ग ङि+ छ
कवर्ग् + ईय= कवर्गीयम्

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु शैषिकाः)

# ‘तत आगतः’ इत्यर्थे प्रत्ययविधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ‘तत आगतः’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तत आगतः (४,३.७४)**

अर्थः— पञ्चम्यन्तात् समर्थाद् ‘आगतः’ इत्यर्थेऽणादयो घादयश्च स्युः।

○ स्रुग्घ्नादागतः= स्रौग्घ्नः॥

❖ ‘तत आगतः’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— ठगायस्थानेभ्यः (४,३.७५)**

अर्थः — आयस्थानवाचिनः पञ्चम्यन्तात् ‘आगतः’ इत्यर्थे ‘ठक्’ स्यात्।

○ शुल्कशालाया आगतः= शौल्कशालिकः॥

❖ ‘तत आगतः’ इत्यर्थे वुञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— विद्यायोनिसम्बन्धेभ्यो वुञ् (४,३.७७)**

अर्थः — विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्च पञ्चम्यन्तेभ्यः ‘आगतः’ इत्यर्थे ‘वुञ्’ स्यात्।

○ औपाध्यायकः। पैतामहकः॥ (पितामहाद् आगतः)

स्रुग्घ्नाद् आगतः
स्रुग्घ्न ङसिँ + अण्
स्रौग्घ्न्+ अ
स्रौग्घ्नः

आयः= स्वामिग्राह्यो भावः,
स यस्मिन् उत्पद्यते तद् आयस्थानम्

शुल्कशालायाः आगतः
शुल्कशाला ङसिँ + ठक्
शुल्कशाल् + इक
शौल्कशालिकः (Toll Plaza)

उपाध्यायाद् आगतः
उपाध्याय + वुञ्
औपाध्याय्+ अक
औपाध्यायकः

लघुसिद्धान्तकौमुद्याम् (तद्धितेषु शैषिकाः)

# ‘तत आगतः’ इत्यर्थे प्रत्ययविधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ ‘तत आगतः’ इत्यर्थे ‘रूप्य’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— हेतु-मनुष्येभ्योऽन्यतरस्यां रूप्यः (४,३.८१)**

अर्थः— हेतुवाचकात् मनुष्यवाचकात् च पञ्चम्यन्तात् समर्थाद् ‘आगतः’ इत्यर्थे ‘रूप्य’प्रत्ययः वा स्यात्।

- समादागतं= समरूप्यम्।
- पक्षे – गहादित्वाच्छः। समीयम्। विषमीयम्।
- देवदत्तरूप्यम्। दैवदत्तम्॥ देवदत्तीयम्। इति चेन्नै संस्करणे अधिकः पाठः।

❖ ‘तत आगतः’ इत्यर्थे ‘मयट्’प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— मयट् च (४,३.८२)**

अर्थः — हेतुवाचकात् मनुष्यवाचकात् च पञ्चम्यन्तात् समर्थाद् ‘आगतः’ इत्यर्थे ‘मयट्’प्रत्ययः वा स्यात्।

- सममयम्। देवदत्तमयम्॥

समाद् आगतम्
सम ङसिँ + रूप्य
समरूप्यम् (उचित स्थान से आया हुआ धनादि)

सम ङसिँ + छ
सम् + ईय
समीयम्

विषम ङसिँ + छ
विषम् + ईय
विषमीयम्

देवदत्ताद् आगतम्
देवदत्त ङसिँ + रूप्य
देवदत्तरूप्यम्

अणि—
दैवदत्तम्
छे—
देवदत्तीयम्

समाद् आगतम्
सम ङसिँ + मयट्
सम+ मय
सममयम्

देवदत्ताद् आगतम्
देवदत्त ङसिँ + मयट्
देवदत्त+ मय
देवदत्तमयम्

# 'प्रभवति, गच्छति' इत्यर्थयोः प्रत्ययविधानम्



{मूलपाठः}

❖ 'प्रभवति' इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— प्रभवति (४,३.८३)**

अर्थः— पञ्चम्यन्तात् समर्थाद् 'प्रभवति' इत्यर्थेऽणादयो घादयश्च स्युः।

○ हिमवतः प्रभवति= हैमवती गङ्गा॥

❖ 'गच्छति' इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तद्गच्छति पथिदूतयोः (४,३.८५)**

अर्थः — द्वितीयासमर्थाद् 'गच्छति' इत्यर्थेऽणादयो घादयश्च स्युः। यो गच्छति स पन्था दूतो वा चेत्।

○ स्रुघ्नं गच्छति= स्रौघ्नः पन्था दूतो वा॥

प्रभवति= सर्वप्रथमं प्रकाशते।

हिमवतः प्रभवति
हिमवत् ङसिँ + अण्
हैमवत् + अ
हैमवत+ ङीप्
हैमवती (गङ्गा)

स्रुघ्नं गच्छति
स्रुघ्न अम् + अण्
स्रौघ्न्+ अ
स्रौघ्नः (पन्था दूतो वा)

# 'अभिनिष्क्रामति, अधिकृत्य कृतो ग्रन्थः ,अस्य निवासः' एष्वर्थेषु प्रत्ययविधानम्

{मूलपाठः}

❖ 'अभिनिष्क्रामति' इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अभिनिष्क्रामति द्वारम् (४,३.८६)**

**अर्थः —** द्विතीयान्तात् समर्थाद् 'अभिनिष्क्रामति' इत्यर्थेऽणादयो घादयश्च स्युः, अभिनिष्क्रमणकर्तृ द्वारं चेत्।

○ स्रुघ्नमभिनिष्क्रामति= स्रौघ्नं कान्यकुब्जद्वारम्॥

❖ 'अधिकृत्य कृतो ग्रन्थः' इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अधिकृत्य कृते ग्रन्थे (४,३.८७)**

**अर्थः—** द्वितीयान्तात् समर्थाद् 'अधिकृत्य कृतो ग्रन्थः' इत्यर्थेऽणादयो घादयश्च स्युः।

○ शारीरकमधिकृत्य कृतो ग्रन्थः= शारीरकीयः॥

➢ 'शारीरकं भाष्यमि'ति त्वभेदोपचारात्। इति चेन्नै संस्करणे अधिकः पाठः।

❖ 'अस्य निवासः' इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सोऽस्य निवासः (४,३.८९)**

**अर्थः —** प्रथमान्तात् समर्थाद् 'अस्य निवासः' इत्यर्थेऽणादयो घादयश्च स्युः।

○ स्रुघ्नो निवासोऽस्य= स्रौघ्नः॥

---

स्रुघ्नम् अभिनिष्क्रामति=

उस ओर निकलता है।

स्रुघ्न अम् + अण्

स्रौघ्न्+ अ

स्रौघ्नः (कान्यकुब्जद्वारम्)

---

शरीरस्यायं= शारीरः (जीवात्मा) स्वार्थे कन्।

शारीरकमधिकृत्य कृतो ग्रन्थः

शारीरक अम् + छ

शारीरक् + ईय

शारीरकीयः (ग्रन्थः/ भाष्यम्)

---

स्रुघ्नो निवासोऽस्य

स्रुघ्न सुँ+ अण्

स्रौघ्न्+ अ

स्रौघ्नः

# ‘प्रोक्तम्, इदम्’ इत्यर्थयोः प्रत्ययविधानम्



{मूलपाठः}

❖ ‘प्रोक्तम्’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तेन प्रोक्तम् (४,३.१०१)

अर्थः — तृतीयान्तात् समर्थाद् ‘प्रोक्तम्’ इत्यर्थेऽणादयो घादयश्च स्युः।

○ पाणिनिना प्रोक्तं= पाणिनीयम् ॥

❖ ‘इदम्’ इत्यर्थे अणादिप्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तस्येदम् ॥ (४,३.१२०)

अर्थः — षष्ठ्यन्तात् समर्थाद् ‘इदम्’ इत्यर्थेऽणादयो घादयश्च स्युः।

○ उपगोरिदम्= औपगवम् ॥

॥ इति शैषिकाः ॥ ५ ॥

पाणिनिना प्रोक्तम्
पाणिनि टा+ छ
पाणिन्+ ईय
पाणिनीयम्

उपगोः इदम्
उपगु ङस् + अण्
औपगो+ अ
औपगव
औपगवम्

# शैषिकस्य परीक्षणम्

**०१. शैषिकार्थाः कति सन्ति ?**

क. ११

ख. ३४

**ग. २४**

घ. २०

**०२. 'शेषे' इति सूत्रं कीदृशं सूत्रम् ?**

क. अतिदेशसूत्रम्

ख. विधिसूत्रम्

ग. अधिकारसूत्रम्

**घ. उपर्युक्तोभयम्**

**०३. उपनिषद्भिः प्रतिपाद्यते—**

क. औपनिदकम्

**ख.औपनिषदः**

ग. उपनिषत्

घ. सर्वे

**०४. 'रक्षः' इत्यस्य कोऽर्थः ?**

क. रक्षकः

ख. रक्षणम्

**ग. राक्षसः**

घ. द्वौवारिकः

**०५. 'ग्रामे जातः' इति विग्रहे रूपम्—**

क. ग्राम्यः

ख. ग्रामीणः

ग. उपर्युक्तोभयम्

घ. ग्रामेयकः

**०६. 'पाश्चात्त्यः' इत्यत्र कः प्रत्ययः ?**

क. अण्

**ख.त्यक्**

ग. अञ्

घ. यञ्

**०७. 'दिव्यम्' इत्यत्र कः प्रत्ययः ?**

क. यञ्

ख. त्यक्

**ग. यत्**

घ. यक्

**०८. 'अमात्यः' इत्यत्र कः प्रत्ययः?**

क. यञ्

ख. त्यक्

ग. यत्

**घ. त्यप्**

**०९. 'नित्यः' इत्यत्र कः प्रत्ययः ?**

क. यञ्

ख. त्यक्

ग. यत्

**घ. त्यप्**

**१०. एषु कस्य वृद्धसञ्ज्ञा—**

क. देवदत्तः

ख. तत्र

**ग. शाला**

घ. स्नेहा

**११. 'त्यदादीनि च' इति सूत्रेण भवति?**

**क. वृद्धसञ्ज्ञा**

ख. वृद्धिसञ्ज्ञा

ग. सर्वनामसञ्ज्ञा

घ. छप्रत्ययः

**१२. 'तदीयः' इत्यत्र कः प्रत्ययः—**

क. ढप्रत्ययः

ख. घप्रत्ययः

**ग. छप्रत्ययः**

घ. खप्रत्ययः

**१३. गहादिभ्यश्च इति सूत्रेण किं विधीयते ?**

क. ढप्रत्ययः

ख. घप्रत्ययः

**ग. छप्रत्ययः**

घ. खप्रत्ययः

**१४. 'युवयोर्युष्माकं वा अयम्' इति विग्रहे किं रूपम् असाधु?**

क. युष्मदीयः

ख. यौष्माकीणः

ग. यौष्माकः

**घ. त्वदीयः**

**१५. 'मदीयः' इत्यस्य विग्रहवाक्यं किम्?**

क. ममेयम्

**ख.ममायम्**

ग. अस्माकं अयम्

घ. मदे जातः

**१६. शैषिके कालवाचिभ्यः कः प्रत्ययो भवति?**

क. ठक्

ख. ठञ्

ग. अण्

घ. खञ्

**१७. 'प्रावृषि भवः'इत्यर्थे किं रूपम्?**

**क.प्रावृषेण्यः**

ख. प्राविषिकः

ग. प्रावृषिकः

घ. उपर्युक्तं सर्वम्

**१८.'सायन्तनम्' इत्यत्र किं निपात्यते—**

क. एदन्तत्वम्

**ख.मान्तत्वम्**

ग. नान्तत्वम्

घ. षान्तत्वम्

**१९. अद्य भवम् इति विग्रहे किं रूपं साधु?**

क. अद्यतनीयम्

**ख.अद्यतनम्**

ग. आद्यम्

घ. अद्यीयम्

**२०. दोषातनम् इत्यत्र 'दोषा' इत्यस्य कोऽर्थः?**

क. दोषी

ख. दिनम्

**ग. रात्रिः**

घ. त्रुटिः

**२१. राष्ट्रे जातः इति विग्रहे किं रूपं साधु?**

**क.राष्ट्रियः**

ख. राष्ट्रीयः

ग. उभयम्

घ. उभयं न

**२२. 'कौशेयम्' इत्यत्र कस्मिन् अर्थे प्रत्ययः ?**

क. उप्ते

**ख.सम्भूते**

ग. विद्यायोनिसम्बन्धे

घ. प्रभवति

**२३. अध्यात्मादेः............. इष्यते।**

क. अण्

ख. ठक्

**ग. ठञ्**

घ. ढक्

**२४. शैषिके वर्गान्तात् कः प्रत्ययो भवति ?**

क. अण्

ख. ठक्

**ग. छ**

घ. ढक्

**२५. शैषिके 'मयट्' प्रत्ययः कस्मिन्नर्थे विधीयते ?**

क. अभिनिष्क्रामति

**ख.आगतः**

ग. अस्य निवासः

घ. प्रोक्तम्

# अथ विकाराद्यर्थकाः

(अथ प्राग्दीव्यतीयाः) अथ विकारार्थकाः



❖ 'विकारे'अणादि-प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— तस्य विकारः (४,३.१३४)**

अर्थः— षष्ठ्यन्तात् समर्थात् 'विकारः' इत्यर्थे प्राग्दीव्यतीयाः अणादय स्युः।

**वार्तिकम्— अश्मनो विकारे टिलोपो वक्तव्यः।**

अर्थः— 'विकारः' इत्यर्थे 'अश्मन्' इति शब्दस्य टेर्लोपः स्यात्।

○ अश्मनो विकारः= आश्मः। भास्मनः। मार्त्तिकः॥

❖ 'विकारे अवयवे' चार्थे अणादि-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— अवयवे च प्राण्योषधिवृक्षेभ्यः (४,३.१३५)**

अर्थः— प्राणि-ओषधि-वृक्षवाचकेभ्यः षष्ठ्यन्तेभ्यः प्रातिपदिकेभ्यः 'अवयवे विकारे' चार्थे प्राग्दीव्यतीयाः अणादय स्युः।

○ चाद्विकारे।

पिप्पलस्य अवयवो विकारो वा

○ मयूरस्यावयवो विकारो वा= मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्॥

अश्मनः विकारः
अश्मन् ङस् + अण्
आश्म् + अ
आश्मः

भस्मनः विकारः
भस्मन् ङस् + अण्
भास्मन् + अ
भास्मनः

मृत्तिकायाः विकारः
मृत्तिका ङस् + अण्
मार्तिक् + अ
मार्त्तिकः

मयूरस्यावयवो विकारो वा
मयूर ङस् + अण्
मायूर् + अ
मायूरः

मूर्वाया अवयवो विकारो वा
मूर्वा ङस् + अण्
मौर्व् + अ
मौर्वम्

# विकार-अवयवयोः 'मयट्'प्रत्ययविधानम्



{मूलपाठः}

❖ वैकल्पिक-मयट्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः (४,३.१४३)**

अर्थः—प्रकृतिमात्रान्मयड्वा स्यात् (भाषायाम्) विकारावयवयोः न तु भक्ष्ये आच्छादने च ।

○ अश्ममयम्, आश्मनम्।

○ अभक्ष्येत्यादि किम्? **मौद्गः** सूपः। **कार्पासम्** आच्छादनम्॥

❖ मयट्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— नित्यं वृद्धशरादिभ्यः (४,३.१४४)**

अर्थः— षष्ठ्यन्त-वृद्धसञ्ज्ञकेभ्यः शरादिगणपठित-प्रातिपदिकेभ्यश्च 'विकारे अवयवे' चार्थे नित्यं 'मयट्'प्रत्ययः स्यात् (भाषायाम्) विकारावयवयोः न तु भक्ष्ये आच्छादने च ।

अश्मनः विकारः
अश्मन्+ मयट्
अश्म + मय
अश्ममयम्

अश्मनः अवयवः
अश्मन् + अण्
आश्मन् + अ
आश्मनम्

मुद्गानां विकारः= मौद्गः
कर्पासस्य विकारः= कार्पासम्

# पुरीषे‘मयट्’ विकारावयवयोः यत्-प्रत्ययविधानम्



{मूलपाठः}

○ आम्रमयम्। शरमयम्॥

❖ मयट्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— गोश्च पुरीषे (४,३.१४५)

अर्थः— षष्ठ्यन्तात् गोशब्दात् पुरीषेऽर्थे नित्यं ‘मयट् स्यात्।

○ गोः पुरीषं= गोमयम्॥

❖ यत्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— गोपयसोर्यत्॥ (लसक_१११८ = पा_४,३.१६०)

अर्थः—षष्ठ्यन्ताभ्यां गो-पयस्-प्रातिपदिकाभ्याम् ‘अवयवे विकारे’ चार्थे तद्धितसञ्ज्ञकः ‘यत्’प्रत्ययः स्यात्।

○ गव्यम्। पयस्यम्॥

॥ इति विकारार्थाः॥ (॥ इति प्राग्दीव्यतीयाः)॥ ६॥

आम्रस्य विकारः अवयवो वा= आम्रमयम्।

शरस्य विकारः अवयवो वा= शरमयम्।

गोर्विकारः अवयवो वा
गो ङस्+ यत्
गो + य
ग् अव् + य
गव्यम्

पयसः विकारः अवयवो वा
पयस्+ य

# लघुसिद्धान्तकौमुद्याम्
# तद्धितेषु ठगधिकारः

## अथ ठगधिकारः (३९अर्थाः) २ महोत्सर्गः (ठक्)

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

### ➤ प्राग्वहतेष्ठक् ४.४.१

❖ वार्तिकानि— १.तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्। २.आहौ प्रभूतादिभ्यः। ३. पृच्छतौ सुस्नातादिभ्यः। ४. गच्छतौ परदारादिभ्यः।

०१.तेन दीव्यति ०२.खनति ०३.जयति ०४.जितम् ॥ ४.४.२ ॥
०५. संस्कृतम् ॥ ४.४.३ ॥
०६. तरति ॥ ४.४.५ ॥
०७. चरति ॥ ४.४.८ ॥
०८. वेतनादिभ्यो जीवति ॥ ४.४.१२ ॥
०९. हरत्युत्सङ्गादिभ्यः ॥ ४.४.१५ ॥
१०. निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ ४.४.१९ ॥
११. संसृष्टे ॥ ४.४.२२ ॥
१२. व्यञ्जनैरुपसिक्ते ॥ ४.४.२६ ॥
१३. ओजः सहोम्भसा वर्तते ॥ ४.४.२७ ॥
१४. प्रयच्छति गर्ह्यम् ॥ ४.४.३० ॥
१५. उञ्छति ॥ ४.४.३२ ॥
१६. रक्षति ॥ ४.४.३३ ॥
१७. शब्ददर्दुरं करोति ॥ ४.४.३४ ॥
१८. पक्षिमत्स्यमृगान्हन्ति ॥ ४.४.३५ ॥
१९. परिपन्थं च तिष्ठति ॥ ४.४.३६ ॥
२०. माथोत्तरपदपदव्यनुपदं धावति ॥ ४.४.३७ ॥
२१. पदोत्तरपदं गृह्णाति ॥ ४.४.३९ ॥
२२. धर्मं चरति ॥ ४.४.४१ ॥
२३. प्रतिपथमेति ठंश्च ॥ ४.४.४२ ॥
२४. समवायान् समवैति ॥ ४.४.४३ ॥
२५. संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४.४.४६ ॥
२६. तस्य धर्म्यम् ॥ ४.४.४७ ॥
२७. अवक्रयः ॥ ४.४.५० ॥
२८. तदस्य पण्यम् ॥ ४.४.५१ ॥
२९. शिल्पम् ॥ ४.४.५५ ॥
३०. प्रहरणम् ॥ ४.४.५७ ॥
३१. अस्तिनास्तिदिष्टं मतिः ॥ ४.४.६० ॥
३२. शीलम् ॥ ४.४.६१ ॥
३३. कर्माध्ययने वृत्तम् ॥ ४.४.६३ ॥
३४. हितं भक्षाः ॥ ४.४.६५ ॥
३५. तदस्मै दीयते नियुक्तम् ॥ ४.४.६६ ॥
३६. तत्र नियुक्तः ॥ ४.४.६९ ॥
३७. अध्यायिन्यदेशकालात् ॥ ४.४.७१ ॥
३८. कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ४.४.७२ ॥
३९. निकटे वसति ॥ ४.४.७३ ॥

**{२. ठक् अधिकारः}**
प्राग्वहतेष्ठक्-४.४.१ तः आवसथात्ष्ठल्-४.४.७४

लघुसिद्धान्तकौमुद्याम्— (१६अर्थाः)

## ३ महोत्सर्गः (यत्)

➤ प्राग्घितात् यत् ४.४.७५
तद्वहति रथयुगप्रासङ्गम् ४.४.७६

# ‘दीव्यति खनति जयति जितम् संस्कृतम्’
## एतेष्वर्थेषु ‘ठक्’प्रत्ययविधानम्



{मूलपाठः}

❖ ठकोऽधिकारार्थम् अधिकारसूत्रम्—

**सूत्रम्— प्राग्वहतेष्ठक् (४,४.१)**

अर्थः— ‘तद्वहती...’त्यतः प्राक् ठगधिक्रियते॥

❖ दीव्यतीत्यद्यर्थेषु ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तेन दीव्यति खनति जयति जितम् (४,४.२)**

अर्थः— तृतीयान्तसमर्थात् ‘दीव्यति खनति जयति जितम्’ एतेषु चतुर्षु अर्थेषु ‘ठक्’ स्यात्।

○ अक्षैर्दीव्यति खनति जयति जितो वा= आक्षिकः॥

❖ ‘संस्कृतम्’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— संस्कृतम् (४,४.३)**

अर्थः— तृतीयान्तसमर्थात् ‘संस्कृतम्’ इत्यर्थे‘ठक्’ स्यात्।

○ दध्ना संस्कृतम्= दाधिकम्। मारीचिकम्॥

अक्षैर्दीव्यति खनति जयति जितो वा

अक्ष भिस् + ठक्

आक्ष् + इक

आक्षिकः

दध्ना संस्कृतम्

दधि टा + ठक्

दाध् + इक

दाधिकम्

मरीचैः संस्कृतम्/ मरीचिभिः संस्कृतम्

मरीच भिस् + ठक्

मारीच् + इक

मारीचिकम्

# ‘तरति चरति संसृष्ट’ एतेष्वर्थेषु ‘ठक्’प्रत्ययविधानम्



❖ ‘तरति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— तरति (४,४.५)**

अर्थः— तेनेत्येव। तृतीयान्तसमर्थात् ‘तरति’ इत्यर्थे‘ठक्’ स्यात्।

○ उडुपेन तरति= औडुपिकः॥

❖ ‘चरति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— चरति (४,४.८)**

अर्थः—तृतीयान्ताद् ‘गच्छति भक्षयती’त्यर्थयोष्ठक् स्यात्।

○ हस्तिना चरति= हास्तिकः। दध्ना चरति= दाधिकः॥

❖ ‘संसृष्ट’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— संसृष्टे (४,४.२२)** छौंक देना | संस्कृतं संस्कारः/गुणाधानम्

अर्थः— तृतीयान्तसमर्थात् ‘संसृष्ट’ इत्यर्थे‘ठक्’ स्यात्।

○ दध्ना संसृष्टं= दाधिकम्॥ मिला हुआ। युक्त। | संसृष्टं संसर्गो मेलनम्।

उडुपेन तरति
उडुप टा + ठक्
औडुप् + इक
औडुपिकः

हस्तिना चरति
हस्तिन् टा + ठक्
हास्त् + इक
(नस्तद्धिते)
हास्तिकः

दध्ना चरति
दधि टा + ठक्
दाध् + इक
दाधिकः

दध्ना संसृष्टं
दधि टा+ ठक्
दाध् + इक
दाधिकम्

# ‘उञ्छति रक्षति करोति’ एतेष्वर्थेषु ‘ठक्’प्रत्ययविधानम्



{मूलपाठः}

❖ ‘उञ्छति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** उञ्छति (४,४.३२)

**अर्थः—** द्वितीयान्तसमर्थात् ‘उञ्छति’ इत्यर्थे‘ठक्’ स्यात्।

○ बदराण्युञ्छति= बादरिकः॥

❖ ‘रक्षति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** रक्षति (४,४.३३)

**अर्थः—** द्वितीयान्तसमर्थात् ‘रक्षति’ इत्यर्थे‘ठक्’ स्यात्।

○ समाजं रक्षति= सामाजिकः॥

❖ ‘करोति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्

दर्दुरः = वाद्य-पात्रविशेषः

**सूत्रम्—** शब्ददर्दुरं करोति (४,४.३४)

**अर्थः—** द्वितीयान्तसमर्थात् शब्द-दर्दुरशब्दात् ‘करोति’ इत्यर्थे‘ठक्’ स्यात्।

○ शब्दं करोति= शाब्दिकः। दर्दुरं करोति= दार्दुरिकः॥

बदराणि उञ्छति
बदर शस्+ ठक्
बादर् + इक
बादरिकः

समाजं रक्षति
समाज अम् + ठक्
सामाज्+ इक
सामाजिकः

शब्दं करोति
शब्द अम्+ ठक्
शाब्द् + इक
शाब्दिकः

दर्दुरं करोति
दर्दुर अम्+ ठक्
दार्दुर् + इक
दार्दुरिकः

# ‘चरति, शिल्पमस्य’ एतेष्वर्थेषु ‘ठक्’प्रत्ययविधानम्



❖ ‘चरति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— धर्मं चरति (४,४.४१)**

अर्थः— द्वितीयान्तसमर्थात् धर्मशब्दात् ‘चरति’ इत्यर्थे‘ठक्’ स्यात्।

- धार्मिकः

**वार्तिकम्— अधर्माच्चेति वक्तव्यम्।**

- आधर्मिकः॥

- ‘शिल्पम् अस्य’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— शिल्पम् (४,४.५५)**

शिल्पम्= कलासु कौशलम्

अर्थः— प्रथमान्तसमर्थात् ‘शिल्पम् अस्य’ इत्यर्थे ‘ठक्’ स्यात्।

- मृदङ्गवादनं शिल्पमस्य= मार्दङ्गिकः॥

धर्मं चरति
धर्म अम्+ ठक्
धार्म् + इक
धार्मिकः

अधर्मं चरति
अधर्म अम्+ ठक्
आधर्म् + इक
आधर्मिकः

मृदङ्गवादनं शिल्पमस्य
मृदङ्ग सुँ+ ठक्
मार्दङ्ग् + इक
मार्दङ्गिकः

# ‘प्रहरणम् अस्य, शीलम् अस्य, वसति’ एतेष्वर्थेषु ‘ठक्’प्रत्ययविधानम्



{मूलपाठः}

○ ‘प्रहरणम् अस्य’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्

**सूत्रम्— प्रहरणम् (४,४.५७)**

अर्थः— तदस्येत्येव। प्रथमान्तसमर्थात् ‘प्रहरणम् अस्य’ इत्यर्थे ‘ठक्’ स्यात्।

○ असिः प्रहरणमस्य= आसिकः। धानुष्कः॥

❖ ‘शीलम् अस्य’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— शीलम् (४,४.६१)**

अर्थः— प्रथमान्तसमर्थात् ‘शीलम् अस्य’ इत्यर्थे ‘ठक्’ स्यात्।

○ अपूपभक्षणं शीलमस्य= आपूपिकः॥

○ ‘वसति’ इत्यर्थे ठक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— निकटे वसति (४,४.७३)**

अर्थः— सप्तम्यन्तसमर्थात् निकटशब्दात् ‘वसति’ इत्यर्थे ‘ठक्’ स्यात्।

○ नैकटिको भिक्षुकः॥

॥ इति ठगधिकारः॥ (प्राग्वहतीयाः)॥ ७॥

असिः प्रहरणमस्य
असि सुँ+ ठक्
आस् + इक
आसिकः

धनुः प्रहरणमस्य
धनु सुँ+ ठक्
धानुष् + क
धानुष्कः (इसुसुक..)

अपूपभक्षणं शीलमस्य
अपूप सुँ + ठक्
आपूप्+ इक
आपूपिकः

निकटे वसति
निकट ङि+ ठक्
नैकट्+ इक
नैकटिकः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु यदधिकारः

# अथ यदधिकारः (४२अर्थाः) ३महोत्सर्गः (यत्)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

➤ प्राग्घितात् यत् ४.४.७५

१. तद्वहति रथयुगप्रासङ्गम् ४.४.७६
२. विध्यत्यधनुषा ४.४.८३
३. धनगणं लब्धा ४.४.८४
४. वशं गतः ४.४.८६
५. पदमस्मिन् दृश्यम् ४.४.८७
६. मूलमस्याबर्हि ४.४.८८
७. गृहपतिना संयुक्ते ञ्यः ४.४.९०
८.९.१०.११.१२.१३.१४.१५. नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्यानाम्यसम-समितसम्मितेषु ४.४.९१
१६. धर्मपथ्यर्थन्यायादनपेते ४.४.९२
१७. छन्दसो निर्मिते ४.४.९३
१८. हृदयस्य प्रियः ४.४.९५
१९. बन्धने चर्षौ ४.४.९६

२०.२१.२२. मतजनहलात् करणजल्पकर्षेषु ४.४.९७
२३. तत्र साधुः ४.४.९८
२४. समानतीर्थे वासी ४.४.१०७
२५. समानोदरे शयित ओ चोदात्तः ४.४.१०८
२६. भवे छन्दसि ४.४.११०
२७. बर्हिषि दत्तम् ४.४.११९
२८.२९. दूतस्य भागकर्मणी ४.४.१२०
३०. रक्षोयातूनां हननी ४.४.१२१
३१. रेवतीजगतीहविष्याभ्यः प्रशस्ये ४.४.१२२
३२. असुरस्य स्वम् ४.४.१२३
३३. मायायामण् ४.४.१२४
३४. तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ४.४.१२५

३५. मत्वर्थे मासतन्वोः ४.४.१२६
३६. पूर्वैः कृतमिनियौ च ४.४.१३३
३७. अद्भिः संस्कृतम् ४.४.१३४
३८. सहस्रेण संमितौ घः ४.४.१३५
३९. सोममर्हति यः ४.४.१३७
४०. मये च ४.४.१३८
४१. शिवशमरिष्टस्य करे ४.४.१४३
४२. भावे च ४.४.१४४

{३. यदधिकारः}
प्राग्घिताद्यत्-४.४.७५ तः
भावे च-४.४.१४४

लघुसिद्धान्तकौमुद्याम्— (१० अर्थाः)

४महोत्सर्गः (छाधिकारः)
प्राक्क्रीताच्छः-५.१.१ तः
परिखाया ढञ्-५.१.१७

# ‘वहति’ इत्यर्थे यत्-प्रत्ययविधानम्



{मूलपाठः}

❖ यतोऽधिकारार्थम् अधिकारसूत्रम्—

सूत्रम्— प्राग्घिताद्यत् (४,४.७५)

अर्थः— ‘तस्मै हितमि’त्यतः प्राग् यदधिक्रियते॥

❖ ‘वहति’ इत्यर्थे यत्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तद्वहति रथ-युग-प्रासङ्गम् (४,४.७६)

अर्थः— द्वितीयान्तसमर्थेभ्यः रथ-युग-प्रासङ्गशब्देभ्यः ‘वहति’ इत्यर्थे ‘यत्’ स्यात्।

○ रथं वहति= रथ्यः। युग्यः। प्रासङ्ग्यः॥

रथं वहति
रथ अम्+ यत्
रथ् + य
रथ्यः

युगं वहति
युग अम्+ यत्
युग् + य
युग्यः

प्रासङ्गं वहति
प्रासङ्ग अम्+ यत्
प्रासङ्ग् + य
प्रासङ्ग्यः

युगम्= रथाङ्गम्

प्रासङ्गः= वृषस्कन्धे आसज्ञनीयं काष्ठम्

# ‘वहति’ इत्यर्थे यत्-ढक्प्रत्ययविधानम्



❖ ‘वहति’ इत्यर्थे यत्-ढक्प्रत्ययविधायकं विधिसूत्रम्—

{मूलपाठः}

**सूत्रम्— धुरो यड्-ढकौ (४,४.७७)**

अर्थः— द्वितीयान्तात् समर्थाद् धुर्-शब्दात् ‘वहति’ इत्यर्थे ‘यत्-ठक्’ प्रत्ययौ स्याताम्।

- ‘हलि चे’ति दीर्घे प्राप्ते –
- (न भकुर्छुराम् (८,२.७९) भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात्[१]।)
- धुर्यः।
- धौरेयः॥

चेन्नै संस्करणे कोष्ठकान्तर्गतः पाठो नास्ति।

धुरं वहति
धुर् अम्+ यत्
धुर् + य
धुर्यः

धुरं वहति
धुर् अम्+ ढक्
धौर् + एय
धौरेयः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु यदधिकारः

# तार्ये तुल्ये प्राप्ये वध्ये आनाम्ये समे समिते सम्मिते' चार्थे 'यत्' प्रत्ययस्य विधानम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

❖ तार्याद्यर्थेषु यत्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्य-स्तार्य-तुल्य-प्राप्य-वध्यानाम्यसम-समितसम्मितेषु (४,४.९१)**

अर्थः— तृतीयान्तेभ्यः समर्थेभ्यः 'नौ[१] वयस्[२] धर्म[३] विष[४] मूल[५] मूल[६] सीता[७] तुला[८]' एभ्योऽष्टभ्यः क्रमात् 'तार्ये[१] तुल्ये[२] प्राप्ये[३] वध्ये[४] आनाम्ये[५] समे[६] समिते[७] सम्मिते[८]' चार्थे 'यत्' स्यात्।

मूलभागेन= उपादानकारणेन तन्त्वादितुल्यः पटादिपदार्थः।

- नावा तार्यं= नाव्यं (जलम्)।
- वयसा तुल्यो= वयस्यः।
- धर्मेण प्राप्यं= धर्म्यम्।
- विषेण वध्यो= विष्यः।
- मूलेन आनाम्यं= मूल्यम्।
- मूलेन समो= मूल्यः।
- सीतया समितं= सीत्यं (क्षेत्रम्)।
- तुलया सम्मितं= तुल्यम्॥

तार्यम्= तरणीयम्। आनाम्यम्= अभिभवनीयम्/प्रापणीयम्। समः= सदृशः।
समितम्= सङ्गतं= निम्नोन्नतादि रहितं कृतम्। सम्मितम्= तुलितम्/परिच्छिन्नम्।

१.नाव टा+ यत्
नौ + य
न् आव् + य
नाव्यम्

२.वयस् + य= वयस्य

३.धर्म + य= धर्म्यम्

४.विष+ य= विष्यः

५.मूल+ य= मूल्यम्
मूलधनम्= पूँजी।

६.मूल+ य= मूल्यः

७.सीता+ य= सीत्यम्

८.तुला+ य= तुल्यम्

# ‘साधुः= कुशलः’ इत्यर्थे यत्-यप्रत्ययविधानम्



❖ ‘साधु’ इत्यर्थे यत्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— तत्र साधुः (४,४.९८)**

अर्थः— सप्तम्यन्तात् समर्थात् ‘साधुः= कुशलः’ इत्यर्थे ‘यत्’ स्यात्।

- अग्रे साधुः = अग्र्यः।
- सामसु साधुः = सामन्यः — ‘ये चाभावकर्मणोरि’ति प्रकृति भावः— कर्मण्यः। शरण्यः॥

❖ ‘साधु’ इत्यर्थे य-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सभाया यः (४,४.१०५)**

अर्थः— सप्तम्यन्तात्समर्थात् सभाशब्दात् ‘साधुः’ इत्यर्थे ‘यत्’ स्यात्।

- सभ्यः॥

॥ इति यतोऽवधिः। (प्राग्घितीयाः)॥ ८॥

अग्रे साधुः
अग्र ङि+ यत्
अग्र् + य
अग्र्यः

सामसु साधुः
सामन् सुप्+ यत्
सामन् + य
सामन्यः

कर्मसु साधुः
कर्मन् सुप्+ यत्
कर्मन् + य
कर्मण्यः

शरणे (त्राणे) साधुः
शरण ङि+ यत्
शरण्+ य
शरण्यः

सभायां साधुः
सभा ङि+ य
सभ्यः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु छयतोरधिकारः

# अथ छ-यतोरधिकारः (चत्वारः अर्थाः)

प्राक्क्रीतीयः/ पाञ्चमिकः ४ महोत्सर्गः (छ)

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

## {४. छाधिकारः}

प्राक्क्रीताच्छः-५.१.१ तः
परिखाया ढञ्-५.१.१७

१. तस्मै हितम् - ५.१.५
२. तदर्थं विकृतेः प्रकृतौ-५.१.१२
३.४. तदस्य तस्मिन् स्यादिति-५.१.१६

शङ्कु ङे+ यत्
शङ्को + य
शङ्कव्यम् (दारु)

गवे हितम्
गो + य
गव्यम्

{मूलपाठः}

❖ छाधिकारार्थम् अधिकारसूत्रम्—

**सूत्रम्—** प्राक् क्रीताच्छः (५,१.१)

**अर्थः—** 'तेन क्रीतमि'त्यतः प्राक् छोऽधिक्रियते॥

❖ यत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** उगवादिभ्यो यत् (५,१.२)

- प्राक् क्रीतादित्येव।

**अर्थः—**उवर्णान्ताद् गवादिभ्यश्च यत् स्यात्।

- छस्यापवादः।
- शङ्कवे हितं= शङ्कव्यं दारु।
- गव्यम्।

## {५. ठञधिकारः}

प्राग्वहतेष्ठञ्-५.१.१८ तः
आकालिकडाद्यन्तवचने-५.१.११४

लघुसिद्धान्तकौमुद्याम्— (१ अर्थः)

गवादिगणः अयम् –
गो, हविस्, वर्हिष्, खट, अष्टका, युग, मेधा, स्रक्,
गणसूत्रम्— नाभि नभं च
गणसूत्रम्— शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम्
गणसूत्रम्— ऊधसोऽनङ् च
खर, स्खद, अक्षर, विष । इति गवादिः।

# ‘तस्मै हितम्’ इत्यर्थे छ-यत्-प्रत्ययविधानम्



{मूलपाठः}

**गणसूत्रम्—नाभि नभं च।**

अर्थः— नाभिशब्दो यतं लभते नभादेशं च।

○ नभ्योऽक्षः। नभ्यमञ्जनम्॥

❖ हितार्थे छ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तस्मै हितम् (५,१.५)**

अर्थः— चतुर्थ्यन्तसमर्थात् ‘हितम्’ इत्यर्थे ‘छ’ स्यात्। उवर्णान्ताद् गवादिभ्यश्च तु ‘यत्’ प्रत्ययः।

○ वत्सेभ्यो हितो= वत्सीयो गोधुक्॥

❖ यत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— शरीरावयवाद्यत् (५,१.६)**

अर्थः— चतुर्थ्यन्तसमर्थात् शरीरावयवात् ‘हितम्’ इत्यर्थे ‘यत्’ स्यात्।

○ दन्त्यम्। कण्ठ्यम्। नस्यम्॥

नाभये हितः
नाभि ङे+ यत्
नभ्+ य
नभ्यः (अक्षः)

नाभये हितम्
नाभि ङे+ यत्
नभ्+ य
नभ्यम् (अञ्जनम्)

वत्सेभ्यो हितः
वत्स भ्यस्+ छ
वत्स्+ ईय
वत्सीयः

दन्तेभ्यो हितम्
दन्त भ्यस्+ यत्
दन्त्+ य
दन्त्यम्

कण्ठाय हितम्
कण्ठ्यम्

नासिकायै हितम्
नस्यम्

# ‘तस्मै हितम्’ इत्यर्थे ख-प्रत्ययविधानम्



{मूलपाठः}

❖ ख-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— आत्मन्विश्वजनभोगोत्तरपदात्खः (५,१.९)**

अर्थः— चतुर्थ्यन्तसमर्थात् आत्मन्-विश्वजन-भोगोत्तरपदात् ‘हितम्’ इत्यर्थे ‘ख’ स्यात्।

❖ प्रकृतिभावार्थं विधिसूत्रम्—

**सूत्रम्— आत्माध्वानौ खे (६,४.१६९)**

अर्थः— एतौ खे प्रकृत्या स्तः।

- आत्मने हितम्= आत्मनीनम्।
- विश्वजनीनम्।
- मातृभोगीणः॥

॥ इति छ-यतोः पूर्णोवधिः। (प्राक्क्रीतीयाः)॥ ९॥

आत्मन् ङे+ ख
आत्मन्+ ईन
आत्मनीनम्

विश्वजनेभ्यो हितम्
विश्वजन भ्यस्+ ख
विश्वजन्+ ईन
विश्वजनीनम्

मातृभोगाय हितः
मातृभोग ङे+ ख
मातृभोग्+ ईन
मातृभोगीणः

# तद्धिते विकारार्थक-ठगधिकार-यदधिकार-छयतोरधिकारः एतेषां परीक्षणम्

**०१. 'अश्मनो विकारः' इति विग्रहे किं रूपम् ?**

क. अश्मनः

ख. अस्मनः

ग. आस्मः

**घ. आश्मः**

**०२. 'मायूरः' भवति—**

क. मयूरस्य विकारः

ख. मयूरस्य अवयवः

**ग. उपर्युक्तोभयम्**

घ. मयूरः

**०३. 'अश्ममयम्' इत्यत्र कः प्रत्ययः ?**

**क. मयट्**

ख. मयम्

ग. यत्

घ. अयम्

**०४. 'नित्यं वृद्धशरादिभ्यः' इत्यनेन किं विधीयते—**

क. वृद्धसञ्ज्ञा

ख. वृद्धिः

**ग. मयट्प्रत्ययः**

घ. छप्रत्ययः

**०५. 'गव्यम्' इत्यत्र कः प्रत्ययः—**

**क. यत्**

ख. यम्

ग. य

घ. मयट्

**०६. प्राग्दीव्यतीय-प्रत्ययानाम् अन्तिमं प्रकरणम् अस्ति—**

क. शैषिकः

**ख. विकारार्थकः**

ग. ठगधिकारः

घ. अपत्याधिकारः

**०७. ठगधिकारे अयम् अर्थो नास्ति—**

**क. विकारः**

ख. संस्कृतम्

ग. चरति

घ. शिल्पम्

**०८. ठगधिकारस्य अन्तिमावधिर् वर्तते—**

क. तेन दीव्यति खनति जयति जितम्

**ख. तद्वहति रथयुगप्रासङ्गम्**

ग. आवसथात्ष्ठल्

घ. अस्तिनास्तिदिष्टं मतिः

**०९. मरीचैः संस्कृतम्—**

क. मारीचः

ख. मरीचिः

ग. मारीचकम्

**घ. मारीचिकम्**

**१०. 'तरति' इत्यर्थे ठगधिकारे कः प्रत्ययो भवति—**

क. यत्

ख. छक्

**ग. ठक्**

घ. ठञ्

**११. 'तृतीयान्ताद् 'गच्छति भक्षयती'त्यर्थयोष्ठक् स्यात्' इत्यर्थः कस्य सूत्रस्य—**

**क. चरति**

ख. संसृष्टे

ग. संस्कृतम्

घ. उञ्छति

**१२. 'बदराण्युञ्छति' इति विग्रहे किं रूपम् ?**

क. बादरः

ख. बदरी

ग. बादकिकः

**घ. बादरिकः**

**१३. ठगधिकाररीत्या अशुद्धं चिनुत—**

क. धार्मिकः

ख. आधर्मिकः

**ग. आधार्मिकः**

घ. मार्दङ्गिकः

**१४. असिः प्रहरणमस्य—**

**क. आसिकः**

ख. आशिकः

ग. आस्यकः

घ. असिकः

**१५. 'निकटे वसति' अनेन सूत्रेण कः प्रत्ययो भवति—**

क. अण्

**ख. ठक्**

ग. ठञ्

घ. इक

**१६. यदधिकारः कतमः महोत्सर्गः—**

क. द्वितीयः

**ख. तृतीयः**

ग. चतुर्थः

घ. पञ्चमः

**१७. यदधिकारे लघुसिद्धान्तकौमुद्यां कति अर्थाः वर्णिताः —**

क. ५

ख. ३

**ग. १०**

घ. ११

**१८. 'तद्वहति रथ-युग-प्रासङ्गम्' इत्यनेन कः प्रत्ययो विधीयते—**

क. ठक्

**ख. यत्**

ग. यक्

घ. छ

**१९. 'धौरेयः' इत्यत्र कः प्रत्ययः ?**

क. ठक्

**ख. यत्**

**ग. ढक्**

घ. छ

**२०. हलि चे'ति सूत्रस्य निषेधकं सूत्रं किम् ?**

क. धुरो यड्-ढकौ

**ख. न भकुर्छुराम्**

ग. सभाया यः

घ. शेषे

**२१. सूत्रस्य शुद्धं स्वरूपं चिनुत —**

क. नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्य- -तुल्य-प्राप्य-वध्यानाम्यसम-समितसम्मितेषु

ख. नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्य-स्तार्य -प्राप्य-वध्यानाम्यसम-समितसम्मितेषु

ग. नौ-वयो-धर्म-विष-मूल- सीता-तुलाभ्य-स्तार्य-तुल्य-प्राप्य-वध्यानाम्यसम-समितसम्मितेषु

**घ. नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्य-स्तार्य-तुल्य-प्राप्य-वध्यानाम्यसम-समितसम्मितेषु**

**२२. 'तुल्यम्' इत्यत्र कस्मिन्नर्थे प्रत्ययः ?**

क. समम्

ख. आनाम्यम्

ग. तार्यम्

**घ. सम्मितम्**

**२३. 'कर्मण्यः' इत्यत्र प्रकृतिभावः केन—**

**क. ये चाभावकर्मणोः**

ख. ओत्

ग. प्लुतप्रगृह्याचि नित्यम्

घ. तत्र साधुः

**२४. अष्टाध्यायीमध्ये छ-यतोरधिकारे कति अर्थाः समाविष्टाः भवन्ति—**

क. ०१

ख. ०२

ग. ०३

**घ. ०४**

**२५. 'मातृभोगः' इत्यस्य कोर्थः ?**

**क. शरीरम्**

ख. रसगोलकम्

ग. मातुः भोजनम्

घ. मातुः सुखम्

लघुसिद्धान्तकौमुद्याम् तद्धितेषु ठञधिकारः

# अथ ठञधिकारः (३८अर्थाः) ५महोत्सर्गः (ठञ्)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

➢ प्राग्वतेष्ठञ् ५.१.१८ लघुसिद्धान्तकौमुद्याम्— (५ अर्थाः)

१. तेन क्रीतम् ५.१.३७
२. तस्य निमित्तं संयोगोत्पातौ ५.१.३८
३. तस्येश्वरः ५.१.४२
४. तत्र विदित इति च ५.१.४३
५. तस्य वापः ५.१.४५
६. तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ५.१.४७
७.८.९. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ५.१.५०
१०.११.१२. सम्भवत्यवहरति पचति ५.१.५२
१३.१४.१५. सोऽस्यांशवस्नभृतयः ५.१.५६
१६. तदस्य परिमाणम् ५.१.५७
१७. तदर्हति ५.१.६३
१८. पारायणतुरायणचान्द्रायणं वर्तयति ५.१.७२
१९. संशयमापन्नः ५.१.७३

{५. ठञधिकारः}
प्राग्वतेष्ठञ्-५.१.१८ तः
आकालिकडाद्यन्तवचने-५.१.११४

{तेन तुल्यं क्रिया चेद्वति-५.१.११५}

२०. योजनं गच्छति ५.१.७४
२१. उत्तरपथेनाहृतं च ५.१.७७
२२. तेन निर्वृत्तम् ५.१.७९
२३.२४.२५. तमधीष्टो भृतो भूतो भावी ५.१.८०
२६. षष्टिकाः षष्टिरात्रेण पच्यन्ते ५.१.९०
२७.२८.२९.३०. तेन परिजय्यलभ्यकार्यसुकरम् ५.१.९३
३१. तदस्य ब्रह्मचर्यम् ५.१.९४
३२. तस्य च दक्षिणा यज्ञाख्येभ्यः ५.१.९५
३३. तत्र च दीयते कार्यं भववत् ५.१.९६
३४. सम्पादिनि ५.१.९९
३५. तस्मै प्रभवति ५.१.१०१
३६. समयस्तदस्य प्राप्तम् ५.१.१०४
३७. प्रकृष्टे ठञ् ५.१.१०८
३८. प्रयोजनम् ५.१.१०९

‘क्रीतम्’ इत्यर्थे ठञ्-प्रत्ययविधानम्
‘तस्येश्वर’ ‘तत्र विदित’ इत्यर्थयोः अणञोः विधानम्



{मूलपाठः}

❖ ठञोऽधिकारार्थम् अधिकारसूत्रम्—

सूत्रम्— प्राग्वतेष्ठञ् (५,१.१८)

अर्थः— ‘तेन तुल्यमि..’ति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते॥

❖ ‘क्रीतम्’ इत्यर्थे ठञ्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— तेन क्रीतम् (५,१.३७)

अर्थः— तृतीयान्तसमर्थात् ‘क्रीतम्’ इत्यर्थे ‘ठञ्’ स्यात्।

- सप्तत्या क्रीतं= साप्ततिकम्। प्रास्थिकम्॥
- सर्वभूमिपृथिवीभ्यामणञौ (५,१.४१) (अस्य सूत्रस्य सर्वत्र पाठो नास्ति।)

❖ ‘तस्येश्वर’ ‘तत्र विदित’ इत्यर्थयोः अणञौ-प्रत्ययविधायकं सूत्रद्वयम्—

सूत्रम्— तस्येश्वरः (५,१.४२) तत्र विदित इति च[१] (५,१.४३)

अर्थः— ‘तस्येश्वर’ इत्यर्थे षष्ठ्यन्तात् समर्थात् ‘तत्र विदित’ इत्यर्थे तु सप्तम्यन्तसमर्थात् सर्वभूमिपृथिवीभ्यामणञौ स्तः।

- अनुशतिकादीनां च— सर्वभूमेरीश्वरः/विदितो वा[१]= सार्वभौमः। पार्थिवः॥

१ अयं पाठः चेन्नै संस्करणे

सप्तत्या क्रीतं
सप्तति टा+ ठञ्
सप्तत् + इक
साप्ततिकम्

प्रस्थेन क्रीतं

सर्वभूमेरीश्वरः/सर्वभूमौ विदितः
सर्वभूमि ङस्/ङि+ अण्
सार्वभौम् + अ
सार्वभौमः

पृथिव्या ईश्वरः/पृथिव्यां विदितः
पृथिवी ङस्/ङि+ अञ्
पार्थिवः

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु ठञधिकारः

# पङ्क्ति-विंशत्यादि दशानां शब्दानां निपातनम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ निपातनार्थ विधिसूत्रम्—

**सूत्रम्—** पङ्क्ति-विंशति-त्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टि-सप्तत्यशीति-नवति-शतम् (५,१.५९)

**अर्थः—** एते रूढिशब्दा निपात्यन्ते॥

सिद्धप्रक्रियस्य निर्देशो निपातनम्।

पञ्चत्= पाँच का समूह
दशत्= दस का समूह

१.पञ्च (पादाः) परिमाणमस्य = पङ्क्तिच्छन्दः
द्वौ पञ्चतौ परिमाणमस्य= (पङ्क्तिः) दश

२.द्वौ दशतौ परिमाणमस्य सङ्घस्य= विंशति

३.त्रयो दशतः परिमाणमस्य सङ्घस्य= त्रिंशत्

४.चत्वारो दशतः परिमाणमस्य सङ्घस्य= चत्वारिंशत्

५.पञ्च दशतः परिमाणमस्य सङ्घस्य= पञ्चाशत्

६.षड् दशतः परिमाणमस्य सङ्घस्य= षष्टिः

७.सप्त दशतः परिमाणमस्य सङ्घस्य= सप्ततिः

८.अष्ट दशतः परिमाणमस्य सङ्घस्य= अशीतिः

९.नव दशतः परिमाणमस्य सङ्घस्य= नवतिः

१०.दश दशतः परिमाणमस्य सङ्घस्य= शतम्

# ‘अर्हति’ इत्यर्थे ‘निर्वृत्तम्’ इत्यर्थे च ठञ्-प्रत्ययविधानम्



{मूलपाठः}

❖ ‘अर्हति’ इत्यर्थे ठञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** तदर्हति (५,१.६३)

**अर्थः—** ‘लब्धुं योग्यो भवतीत्यर्थे’ द्वितीयान्ताट्ठञादयः स्युः।

○ श्वेतच्छत्रमर्हति= श्वैतच्छत्रिकः॥

❖ ‘अर्हति’ इत्यर्थे यत्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** दण्डादिभ्यः[१] (५,१.६६)

**अर्थः—** द्वितीयान्तसमर्थेभ्यः एभ्यो= दण्डादिभ्यो ‘अर्हति’ इत्यर्थे यत् स्यात्।

○ दण्डमर्हति= दण्ड्यः। अर्घ्यः। वध्यः॥

❖ ‘सिद्धम्’ इत्यर्थे ठञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** तेन निर्वृत्तम् (५,१.७९)

**अर्थः—** तृतीयान्तसमर्थात् ‘निर्वृतम् (निष्पन्नम्)’ इत्यर्थे ठञ् स्यात्।

○ अह्ना निर्वृत्तम्= आह्निकम्॥

॥ इति ठञोऽवधिः। (प्राग्वतीयाः)॥ १०॥

१.दण्डादिभ्यो यत् , दण्डादिभ्यो यः, इत्यपि स्वरूपमस्योपलभ्यते।

श्वेतच्छत्रमर्हति
श्वेतच्छत्र अम्+ ठञ्
श्वैतच्छत्र् + इक
श्वैतच्छत्रिकः

दण्डमर्हति
दण्ड अम्+ यत्
दण्ड् + य
दण्ड्यः

2.अर्घम्= पूजाविधिमर्हति।
3.वधमर्हति

अह्ना निर्वृत्तम्
अहन् टा +ठञ्
आह् न् + इक (अल्लोपोऽनः)
आह्निकम्

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भावकर्मार्थाः

# भावकर्मार्थप्रकरणम् / त्वतलोरधिकारः/ नञ्स्नञधिकारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

## अव्ययतद्धितः

तेन तुल्यं क्रियाचेद्वतिः ५.१.११४' इत्यनेन विधीयमानो वतिप्रत्ययोऽव्यय-संज्ञकः।

## वतिप्रत्ययः

११५. तेन तुल्यं क्रिया चेद्वतिः १७७८।

११६. तत्र तस्येव १७७९।

११७. तदर्हम् १७८०।

११८. उपसर्गाच्छन्दसि धात्वर्थे ३४९६।

## भावकर्मार्थकप्रत्ययाः

११९. तस्य भावस्त्वतलौ १७८१।

## त्वतलाधिकारः

१२०. आ च त्वात् १७८२।

अधिकारोऽयम्। 'ब्रह्मणस्त्व ५.१.१३६ इति वक्ष्यति। आ-एतस्मात् त्वसंशब्दनात् यदित ऊर्ध्वमनुक्रमिष्यते तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ।

१२१. न नञ्पूर्वात्-तत्पुरुषा-दचतुर-संगत-लवण-वट-युध-कत-रस-लसेभ्यः १७८३।

१२२. पृथ्वादिभ्यः इमनिज्वा १७८४।

१२३. वर्णदृढादिभ्यः ष्यञ्च १७८७।

१२४. गुणवचनब्राह्मणादिभ्यः - कर्मणि च १७८८।

१२५. स्तेनाद्यन्नलोपश्च १७९०।

१२६. सख्युर्यः १७९१।

१२७. कपिज्ञात्योर्ढक् १७९२।

१२८. पत्यन्त-पुरोहितादिभ्यो - यक् १७९३।

१२९. प्राणभृज्जातिवचनोद् - गात्रादिभ्योऽञ् १७९४।

१३०. हायनान्त-युवादिभ्योऽण् १७९५।

१३१. इगन्ताच्च लघुपूर्वात् १७९६।

१३२. योपधाद् गुरुपोत्तमाद् - वुञ् १७९७।

१३३. द्वन्द्व-मनोज्ञादिभ्यश्च १७९८।

१३४. गोत्रचरणाच्छ्लाघात्याकार - तदवेतेषु १७९९।

१३५. होत्राभ्यश्छः १८००।

१३६. ब्रह्मणस्त्वः १८०१।

इति पञ्चमाध्याये प्रथमः पादः

# 'तुल्यम्' इत्यर्थे वतिँ-प्रत्ययस्य विधानम्



{मूलपाठः}

❖ 'तुल्यम्' इत्यर्थे वतिँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तेन तुल्यं क्रिया चेद्वतिँः (५,१.११५)**

अर्थः— तृतीयान्तसमर्थात् 'तुल्यम्' इत्यर्थे 'वतिँ'प्रत्ययः स्यात्। यत्तुल्यं सा क्रिया चेत्।

- ब्राह्मणेन तुल्यं= ब्राह्मणवत् अधीते।
- क्रिया चेदिति किम्? गुणतुल्ये मा भूत्— पुत्रेण तुल्यः स्थूलः॥

❖ 'तुल्यम्' इत्यर्थे वतिँ-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— तत्र तस्येव (५,१.११६)**

अर्थः— सप्तम्यन्तात् षष्ठ्यन्ताच्च समर्थात् 'इव' इत्यर्थे 'वतिँ'प्रत्ययः स्यात्।

- मथु[1]रायामिव= **मथुरावत्** स्रुघ्ने प्राकारः। चैत्रस्येव= **चैत्रवन्मैत्रस्य** गावः[2]॥

१. मधुरायामिव.... इति चेन्नै संस्करणे पाठः।

२. भावः इति चेन्नै संस्करणे पाठः।

ब्राह्मणेन तुल्यम् अधीते
ब्राह्मण टा+ वतिँ
ब्राह्मण+ वत्
ब्राह्मणवत् (अधीते क्षत्रियः)

मथुरायाम् इव
मथुरा ङि+ वतिँ
मथुरावत् (स्रुघ्ने प्राकारः)

चैत्रस्य इव
चैत्र ङस्+ वतिँ
चैत्रवत् (मैत्रस्य गावः)

तपः श्रुतञ्च योनिश्च एतद् ब्राह्मणकारणम्।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥

# भावार्थे 'त्व-तल्'प्रत्यययोर्विधानम्



❖ 'भाव' इत्यर्थे 'त्व-तलौ'प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— तस्य भावस्त्वतलौ (५,१.११९)**

**अर्थः— षष्ठ्यन्तसमर्थात् 'भावः' इत्यर्थे 'त्व-तलौ' एतौ प्रत्ययौ स्तः ॥**

प्रकृतिजन्यबोधे प्रकारीभूतो (अर्थ एव) भावप्रत्ययार्थः।

- प्रकृतिजन्यबोधे प्रकारो= भावः।
- गोर्भावो= गोत्वम्, गोता।
- लिङ्गानुशासनसूत्रम्— त्वान्तं क्लीबम् ॥
- लिङ्गानुशासनसूत्रम्— तलन्तं स्त्रियाम्। (चेन्नै संस्करणे)

| गोर् भावः | गोर् भावः |
|---|---|
| गो ङस्+ त्व | गो ङस्+ तल् |
| गो+ त्व | गो+ त |
| गोत्वम् | गोता |

२-यस्माद् गवादिशब्दात्त्वतलौ क्रियेते स गवादिः प्रकृतिः, तज्जन्यबोधो गोत्वप्रकारकगोविशेष्यकस्तत्र यः प्रकारः विशेषणं गोत्वादिः स भावप्रत्ययार्थः। मुख्यविशेष्यतानिरूपितप्रकारताश्रय इति निष्कर्षः ॥



# भावार्थे 'त्व-तल्'प्रत्यययोर्विधानम्



{मूलपाठः}

❖ अधिकारसूत्रम्—

**सूत्रम्**— आ च त्वात् (५,१.१२०)

**अर्थः**— 'ब्रह्मणस्त्व' (५.१.१३६) इत्यतः प्राक् त्व-तलावधिक्रियेते।

- अपवादैः सह समावेशार्थमिदम्।
- चकारो नञ्स्नञ्भ्यामपि समावेशार्थः।
- स्त्रिया भावः – स्त्रैणम्। स्त्रीत्वम्। स्त्रीता।
- पौस्नम्। पुंस्त्वम्। पुंस्ता॥

# भावार्थे इमनिँजादिप्रत्ययविधानम्



{मूलपाठः}

❖ 'भावः' इत्यर्थे इमनिँच्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— पृथ्वादिभ्य इमनिँज्वा (५,१.१२२)**

अर्थः— षष्ठ्यन्तसमर्थेभ्यः पृथ्वादिभ्यः 'भावः' इत्यर्थे 'इमनिँच्' प्रत्ययो वा स्यात्॥

○ वा-वचनम् अणादिसमावेशार्थम्॥

पृथ्वादिगणः — पृथु, मृदु, महत्, पटु, तनु, लघु, बहु, साधु, वेणु, आशु, बहुल, गुरु, दण्ड, ऊरु, खण्ड, चण्ड, बाल, अकिञ्चन, होड, पाक, वत्स, मन्द, स्वादु, ह्रस्व, दीर्घ, प्रिय, वृष, ऋजु, क्षिप्र, क्षुप्र, क्षुद्र, अणु।

❖ रेफादेशविधायकं विधिसूत्रम्—

**सूत्रम्— र ऋतो हलादेर्लघोः (६,४.१६१)**

अर्थः— हलादेर्लघोर् ऋकारस्य 'रः' स्याद् इष्ठेमेयस्सु= इष्ठ-इम-ईयस्सु परतः।

**परिगणन-वार्तिकम्— पृथु-मृदु-भृश-कृश-दृढ-परिवृढानामेव रत्वम्॥[1]**







[1]. इदं वार्तिकं कतिपयसंस्करणेषु 'टेः' इति सूत्रे दर्शितम्।

| | |
|---|---|
| पृथोर् भावः | पृथु + इमन् |
| पृथु ङस्+ इमनिँच् | प् र थु + इमन् |

# भावार्थे इमनिँजादिप्रत्ययविधानम्



{मूलपाठः}

❖ टि-लोपविधायकं विधिसूत्रम्—

**सूत्रम्— टेः (६,४.१५५)**

**अर्थः—** भस्य टेर्लोप इष्ठेमेयस्सु।

○ पृथोर्भावः प्रथिमा। (इमनिँचोऽभावे—)

❖ 'भावः' इत्यर्थे अण्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— इगन्ताच्च लघुपूर्वात्**[1] **(५,१.१३१)**

**अर्थः—** इगन्ताल्लघुपूर्वात् प्रातिपदिकाद् भावेऽण् प्रत्ययः।

○ पार्थवम्।

○ म्रदिमा, मार्दवम्॥

१. इदं सूत्रं सर्वत्र लघुकौमुदीसंस्करणेषु नास्ति।

प्र थ् + इमन्
प्रथिमन्+ सुँ
प्रथिमान्+ स्
प्रथिमा

पृथु + अण्
पार्थो+ अ (ओर्गुणः)
पार्थवम्, पृथुत्वम्, पृथुता

मृदोर् भावः
मृदु ङस्+ इमनिँच्

म्रद्+ इमन्
म्रदिमन्+ सुँ
म्रदिमा

मृदु + अण्
मार्दवम्, मृदुत्वम्, मृदुता

(संस्कृतसाहित्ये इमनिँच्-प्रत्ययान्ताः शब्दाः पुंल्लिङ्गे भवन्ति)

# भावार्थे ष्यञादिप्रत्ययविधानम्



❖ 'भावः' इत्यर्थे ष्यञ्-प्रत्ययविधायकं विधिसूत्रम्— {मूलपाठः}

**सूत्रम्— वर्णदृढादिभ्यः ष्यञ् च (५,१.१२३)**

अर्थः— षष्ठ्यन्तसमर्थेभ्यः वर्णवाचिभ्यो दृढादिभ्यश्च 'भावः' इत्यर्थे 'ष्यञ्' प्रत्ययः स्यात्॥ चादिमनिँच्।

○ शौक्ल्यम्। शुक्लिमा।

○ दार्ढ्यम्। द्रढिमा॥

ये शब्दाः वर्णस्य (colour) निर्देशं कुर्वन्ति यथा - शुक्लः, हरितः, पीतः, कृष्णः आदयः।

दृढादिगणः — दृढ, परिवृढ, भृश, कृश, चक्र, आम्र, लवण, ताम्र, अम्ल, शीत, उष्ण, जड, बधिर, पण्डित, मधुर, मूर्ख, मूक, बाल, तरुण, मन्द, स्थिर, बहुल, दीर्घ, मूढ, आकृष्ट,

गणसूत्रम्— वेर्यात-लाभ-मति-मनः-शारदानाम्।

गणसूत्रम्— समो मतिमनसोः(जवने)।

शुक्लस्य भावः
शुक्ल ङस्+ ष्यञ्
शौक्ल् + य
शौक्ल्यम्

शुक्लस्य भावः
शुक्ल ङस्+ इमनिँच्
शुक्ल् + इमन्
शुक्लिमा

शुक्लत्वम्। शुक्लता

दृढस्य भावः
दृढ ङस्+ ष्यञ्
दार्ढ् + य
दार्ढ्यम्

दृढस्य भावः
दृढ ङस्+ इमनिँच्
दृढ् + इमन्
द्रढिमन्= द्रढिमा

लघुसिद्धान्तकौमुद्याम्
तद्धितेषु भावकर्मार्थाः

# भावे कर्मार्थे च ष्यञादिप्रत्ययविधानम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

{मूलपाठः}

❖ 'भावः-कर्म' इत्यर्थयोः ष्यञ्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्—** गुणवचन-ब्राह्मणादिभ्यः कर्मणि च (५,१.१२४)

**अर्थः—** षष्ठ्यन्तसमर्थेभ्यः गुणवाचिभ्यो ब्राह्मणादिभ्यश्च 'भावः' 'कर्म' इत्यर्थे 'ष्यञ्' प्रत्ययः स्यात्॥ चाद्भावे।

- जडस्य भावः कर्म वा= जाड्यम्।
- मूढस्य भावः कर्म वा= मौढ्यम्।
- ब्राह्मण्यम्। आकृतिगणोऽयम्॥

जडस्य भावः कर्म वा
जड ङस् + ष्यञ्
जाड्+ य
जाड्यम्। जडत्वम्। जडता।

मौढ्यम्। मूढत्वम्। मूढता।

ब्राह्मणस्य भावः कर्म वा— ब्राह्मण्यम्। ब्राह्मणत्वम्। ब्राह्मणता।

**ब्राह्मणादिगणः** — ब्राह्मण, वाडव, माणव, चोर, मूक, आराधय, विराधय, अपराधय, उपराधय, एकभाव, द्विभाव, त्रिभाव, अन्यभाव, समस्थ, विषमस्थ, परमस्थ, मध्यमस्थ, अनीश्वर, कुशल, कपि, चपल, अक्षेत्रज्ञ, निपुण, **गणसूत्रम्— अर्हतो नुम् च ।** संवादिन्, संवेशिन्, बहुभाषिन्, बालिश, दुष्पुरुष, कापुरुष, दायाद्, विशसि, धूर्त, राजन्, संभाषिन्, शीर्षपातिन्, अधिपति, अलस, पिशाच, पिशुन, विशाल, गणपति, धनपति, नरपति, गडुल, निव, निधान, विष, **गणसूत्रम्— सर्ववेदादिभ्यः स्वार्थे। गणसूत्रम्— चतुर्वेदस्य उभयपदवृद्धिश्च।** स्वभाव, निघातिन्, विघातिन्, राजपुरुष, विशस्ति, विशाय, विशात, विजात, नयात, सुहित, दीन, विदग्ध, उचित, समग्र, शील, तत्पर, इदम्पर, यथा, तथा, पुरस्, पुनःपुनर्, अभीक्ष्ण, तरतम, प्रकाम, यथाकाम, निष्कुल, स्वराज, युवराज, सम्राज्, अविदुर, अपिशुन, अनृशंस, अयथायथ, अयथापुर, स्वधर्म, अनुकूल, परिमण्डल, विश्वरूप, ऋत्विज्, उदासीन, ईश्वर, प्रतिभू, साक्षि, मानुष, आस्तिक, नास्तिक, युगपत्, पूर्वापर, उत्तराधर।

# भावे कर्मार्थे च य-ढकादिप्रत्ययविधानम्



{मूलपाठः}

❖ 'भावः-कर्म' इत्यर्थयोः य-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— सख्युर्यः (५,१.१२६)**

अर्थः— षष्ठ्यन्तात् सखिशब्दात् भाव-कर्मणोरर्थयोर् 'य'प्रत्ययः स्यात्॥

○ सख्युर्भावः कर्म वा= सख्यम्॥

❖ 'भावः-कर्म' इत्यर्थयोः ढक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— कपि-ज्ञात्योर्ढक् (५,१.१२७)**

अर्थः— षष्ठ्यन्तसमर्थकपि-ज्ञातिशब्दाभ्यां भाव-कर्मणोरर्थयोर् 'ढक्'प्रत्ययः स्यात्॥

○ कापेयम्। ज्ञातेयम्।

❖ 'भावः-कर्म' इत्यर्थयोः यक्-प्रत्ययविधायकं विधिसूत्रम्—

**सूत्रम्— पत्यन्त-पुरोहितादिभ्यो यक् (५,१.१२८)**

अर्थः— षष्ठ्यन्तेभ्यः पत्यन्तशब्देभ्यः पुरोहितादिशब्देभ्यश्च भावकर्मणोरर्थयोर् 'यक्'प्रत्ययः स्यात्॥

○ सैनापत्यम्। पौरोहित्यम्॥

॥ इति भावकर्मार्थाः/ त्वतलोरधिकारः॥ ११॥

सख्युः भावः कर्म वा
सखि ङस्+य=
सख्यम्। सखित्वम्। सखिता।

कपेः भावः कर्म वा
कपि ङस्+ ढक्
काप् + एय
कापेयम्। कपित्वम्। कपिता।
ज्ञातेर्भावः कर्म वा— ज्ञातेयम्।

सेनापतेः भावः कर्म वा— सैनापत्यम्।
पुरोहितस्य भावः कर्म वा— पौरोहित्यम्।

पुरोहितादिगणः – पुरोहित, गणसूत्रम्— राजासे। संग्रामिक, एषिक, वर्मित, खण्डिक, दण्डिक, छत्रिक, मिलिक, पिण्डिक, बाल, मन्द, स्तनिक, चूडितिक, कृषिक, पूतिक, पत्रिक, प्रतिक, अजानिक, सलनिक, सूचिक, शाक्वर, सूचक, पक्षिक, सारथिक, जलिक, सूतिक, अञ्जलिक।

# ठञधिकार-त्वतलोरधिकार-भावकर्मार्थप्रकरणानां परीक्षणम्

**०१.तेन क्रीतम् इति अर्थाधिकारः कस्मिन् प्रकरणे वर्तते—**

**क.ठञधिकारे**

ख. ठगधिकारे

ग. त्वतलोरधिकारे

घ. विकारार्थके

**०२. सप्तत्या क्रीतम् इति विग्रहे किं रूपम् ?**

क. सप्तशती

ख. साप्तिकम्

ग. साप्ततः

**घ. साप्ततिकम्**

**०३. 'सार्वभौमः' इत्यस्य विग्रहवाक्यं किम् ?**

क. सर्वभूमेरीश्वरः

ख. सर्वभूमौ विदितः

**ग. उपर्युक्तोभयम्**

घ. सर्वभूम्या क्रीतः

**०४. एतेषु रूढिशब्दः कः ?**

क. दश

ख. विंशति

ग. शतम्

घ. उपर्युक्ताः सर्वे शब्दाः

**०५. 'दण्ड्यः' इत्यस्य कोऽर्थः—**

क. दण्डेन क्रीतः

ख. दण्डस्य ईश्वरः

**ग. दण्डम् अर्हति**

घ. दण्डेन ज्ञातः

**०६. 'आह्निकम्' इत्यत्र केन सूत्रेण कः प्रत्ययः ?**

क. दण्डादिभ्यः— यत्

ख. तदर्हति— ठञ्

**ग. तेन निर्वृत्तम्— ठञ्**

घ. तस्येश्वरः— अण्

**०७. 'आह्निकम्' इत्यत्र अनः अकारलोपः केन सूत्रेण ?**

क. अनः

ख. नस्तद्धिते

ग. टेः

**घ. अल्लोपोऽनः**

**०८. ब्राह्मणेन तुल्यम् अधीते= ब्राह्मणवद् इत्यत्र कः प्रत्ययः?**

क. वतिँ

ख. वतुँप्

ग. मतुँप्

घ. क्तवतुँ

**०९. 'पुत्रेण तुल्यः स्थूलः' इति विग्रहे 'पुत्रवत्' इति प्रयोगः कथं न ?**

क. अत्र स्थौल्यगुणेन तुल्यत्वम् इत्यस्मात् कारणात्।

ख. असामर्थ्यात्।

ग. तत्र तस्येव इति सूत्रनिषेधात्।

घ. भावार्थे प्रत्ययाभावात्।

**१०. एतेषु सप्तम्यन्तात् वतिँप्रत्ययः अस्ति—**

क. ब्राह्मणवत्

ख. चैत्रवत्

ग. पुत्रवत्

**घ. मथुरावत्**

**११. प्रकृतिजन्यबोधे प्रकारो...........।**

**क. भावः**

ख. कर्म

ग. जन्यम्

घ. अपादानम्

**१२. तल्-प्रत्ययः कस्मिन्नर्थे भवति ?**

क. कर्मणि

**ख. भावे**

ग. आचारे

घ. तुल्यार्थे

**१३. 'आ च त्वात्' इति कीदृशं सूत्रम् ?**

क. सञ्ज्ञा

ख. परिभाषा

**ग. अधिकारः**

घ. नियमः

**१४. आ च त्वात् इति सूत्रे चकारः किमर्थः ?**

क. विकल्पार्थः

ख. तुल्यार्थस्य अनुवृत्यर्थम्

**ग. नञ्स्नञ्भ्यामपि समावेशार्थः**

घ. व्यर्थः

**१५. 'स्त्रिया भावः' इति विग्रहे किं रूपम् असाधु ?**

**क. स्त्रीवत्।**

ख. स्त्रैणम्।

ग. स्त्रीत्वम्।

घ. स्त्रीता।

**१६. पृथ्वादिभ्यः कः प्रत्ययविधिः ?**

क. अण्

ख. त्व

ग. वतुँप्

**घ. इमनिँच्**

**१७. 'र ऋतो हलादेर्लघोः' इत्यनेन किं भवति—**

क. इमनिँच्

ख. तल्

**ग. रेफः**

घ. उत्वम्

**१८. संस्कृतसाहित्ये इमनिँच्-प्रत्ययान्ताः शब्दाः..........भवन्ति।**

**क.पुल्लिँङ्गे**

ख. स्त्रीलिङ्गे

ग. नपुंसकलिङ्गे

घ. अव्ययानि

**१९. 'पार्थवम्' इत्यत्र अण्-प्रत्ययः केन—**

**क.इगन्ताच्च लघुपूर्वात्**

ख. आ च त्वात्

ग. सर्वभूमिपृथिवीभ्यामणञौ

घ. तस्येदम्

**२०. शौक्ल्यम् इत्यत्र कः प्रत्ययः ?**

क. यत्

ख. य

**ग. ष्यञ्**

घ. अण्

**२१. 'द्रढिमा' इत्यत्र कः प्रत्ययः ?**

क. मनिन्

**ख.इमनिँच्**

ग. अञ्

घ. अण्

**२२. ब्राह्मणस्य भावः कर्म वा इति विग्रहे किं रूपम् असाधु ?**

क. ब्राह्मण्यम्।

**ख.ब्राह्मणवत्।**

ग. ब्राह्मणत्वम्।

घ. ब्राह्मणता।

**२३. गुणवचन-ब्राह्मणादिभ्यः कर्मणि च इति सूत्र विषयेऽसङ्गतं कथनं चिनुत ?**

क. अनेन सूत्रेण ष्यञ्-प्रत्ययः विधीयते।

**ख.गुणवचनस्योदाहरणं शौक्ल्यम् अस्ति।**

ग. ब्राह्मणादि-आकृतिगणो वर्तते।

घ. ब्राह्मणादिगणे चोरशब्दस्य पाठो वर्तते।

**२४. सख्युर्यः इति सूत्रेण य-प्रत्ययः कस्मिन्नर्थे भवति।**

क. भावे

ख. कर्मणि

**ग. उभयोः**

घ. स्वार्थे

**२५. 'पौरोहित्यम्' इत्यत्र कः प्रत्ययः ?**

क. य

**ख.यक्**

ग. ष्यञ्

घ. त्यक्